**मकुरदर्दुरौ**[1] ॥ १—४१ ॥

बकुले पुनः ।
कुलालदण्ड आदर्शे मकुरो मुकुरस्तथा ॥ ४३ ॥[2]

दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः ।
दर्दुरा चण्डिकायां स्यात्, ग्रामजाले च दर्दुरम् ॥ ४४ ॥

**मद्गुरादयश्च** ॥ १—४२ ॥

मद्गुरो मत्स्यभेदे स्यात् कर्बुरं हेम्नि वारिणि[3] ।
रक्षोघयोर्ना स्त्री कृष्णवृन्तायां शबलेऽन्यवत् ॥ ४५ ॥

स्यादुन्नतानते नम्रे सुन्दरे बन्धुरं त्रिषु ।
वागुरा मृगबन्धन्यामातुरो रोगवत्यथ ॥ ४६ ॥

केशे चले च चिकुरः, कुक्कुरः कुकुरः शुनि ।

**असेरुरन्** ॥ १—४३ ॥

स्यादासुरोऽसुरो दैत्ये

**मसेश्च** ॥ १—४४ ॥

मसुरा पण्ययोषिति ॥ ४७ ॥

व्रीहिभेदे द्वयोः

**शावशेरासौ** ॥ १—४५ ॥

ताते दम्पत्योः श्वशुरो

**अविमह्योष्टिषच्**॥ १—४६ ॥

अविषः ।
समुद्रे राज्ञि नद्यां स्त्री, स्यात् पूज्ये महिषः पशौ ॥ ४८ ॥

---

1 मुकुरदर्दुरौ Sid. N. reads मकुरदर्दुरौ and adds—
अकारं मुकुरस्यादौ उकारं दर्दुरस्य च ।
बभाण पाणिनिस्तौ तु व्यत्ययेनाह भोजराट् ॥

2. T. omits this line (43 b)

3. हेमवारिणि T.

महिषी राजपत्न्यां च

**अमेर्दीर्घश्च ॥ १—४७ ॥**

अस्त्र्यामिषं भोग्यमांसयोः ।

**रुहेर्वृद्धिश्च ॥१ —४८ ॥**

रौहिषो मृगभेदे ना, तृणभेदे नपुंसकम् ॥ ४९ ॥

**तवेर्णिद्वा ॥ १—४९ ॥**

तविषः शोभनाकारे भेलेऽब्धिव्यवसाययोः ।
स्वर्गे च तविषी देवकन्यानद्योः क्षितौ बले ॥ ५० ॥

ताविषः काञ्चनेऽपीन्द्रकन्यायामपि ताविषी ।

**नञि व्यथेः ॥ १—५० ॥**

सूर्ये समुद्रेऽव्यथिषो धरारात्र्योऽस्तु स[1] स्त्रियाम् ॥ ५१ ॥

**किलेर्बुक् च ॥ १—५१ ॥**

पापरोगापराधेषु किल्बिषं स्यात्

**इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धि-शुषिभ्यः किरच् ॥ १—५२ ॥**

अथेषिरः ।
आहारेऽग्नौ च, मदिरा मद्येऽथो कामिमेघयोः ॥ ५२ ॥

मुदिरः, खिदिरश्चन्द्रे, छिदिरोऽसिकुठारयोः ।
अग्नौ रज्जौ च, भिदिरं वज्रे, स्यान्मन्दिरं पुरि ॥ ५३ ॥

अगारे च समुद्रे ना, चन्दिरश्चन्द्रहस्तिनोः ।
तमोक्षिरोगौ तिमिरो, मिहिरः सूर्यबुद्धयोः ॥ ५४ ॥

मुहिरः कामुके काम्ये कन्दर्पेऽसभ्यमूर्खयोः ।
वदान्ये मुचिरः, चारौ रुचिरं, रुधिरः कुजे ॥ ५५ ॥

---

1 वा स्त्रियाम् T

अस्रकुङ्कुमयोः क्लीबे, बधिरः श्रोत्रवर्जिते ।
बिले वंश्यादिवाद्ये च शुषिरं नरि मूषके ॥ ५६ ॥

नल्योषधावस्त्रियां तच्छुष्के रन्ध्रान्विते त्रिषु ।

**अशेर्णित् ॥ १—५३ ॥**

आशिरो वीतिहोत्रे स्याद्राक्षसे भास्करे पुमान् ॥ ५७ ॥

**अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥ १—५४ ॥**

अजिरं प्राङ्गणे काये विषये दर्दुरेऽनिले ।
शिशिरो ना हिमे न स्त्री त्वृतुभेदे जडे त्रिषु ॥ ५८ ॥

श्लथेऽचले[1] प्रभूते च शिथिलं स्थिरवाक् स्फिरम् ।
स्थविरो वृद्धभिक्ष्वोः स्यात्, ना चन्द्रे दन्तधावने ॥ ५९ ॥

खदिरः शाकभेदे स्त्री, शिबिरं कटकाशये ।[2]

**सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ॥ १—५५ ॥**

सलिलं वारि, कलिलं मिश्रे च गहने त्रिषु ॥ ६० ॥

वातेऽनिलो, महेला च महिला फलिनीस्त्रियोः ।
भडिलः सेवके शूरे, भण्डिलो दूतभण्डयोः[3] ॥ ६१ ॥

कल्याणे चर्षिभेदे तु शण्डिलः, पिण्डिलः पुनः ।
सङ्घाते गणके वक्रे मुखरे तुण्डिलः, पिके ॥ ६२ ॥

कोकिलो, भविलो भव्ये, कुटिलः क्रूरकर्मणि ।

**कमेः पश्च ॥ १—५६ ॥**

कपिला रेणुकायां च शिंशपागोविशेषयोः ॥ ६३ ॥

---

1 श्लथे ज्वले A
2 कनकाशये B & T
3 मण्डयोः A

पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम् ।
नानले वासुदेवे च मुनिभेदे च कुक्कुरे ॥ ६४ ॥

**गुपादिभ्यः कित् ॥ १—५७ ॥**

गुपिलो राज्ञि, तिजिलः[1] सुधांशौ, गुहिलं वने ।
देविलो धार्मिके, वायौ शुषिलः, पूजिलः सुरे ॥ ६५ ॥

**मिथिलादयश्च ॥ १—५८ ॥**

मिथिला नगरीभेदे, पथिलः पथि यातरि ।
ओषधी तकिला, वेल्लतायां[2] गतिला भवेत् ॥ ६६ ॥

नदीभेदे चण्डिला स्यात्

**पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥ १—५९ ॥**

पतेरो गन्तृपक्षिणोः ।
कठेरः कृच्छ्रजीवी स्यात्, कुठेरः पर्णभोक्तरि ॥ ६७ ॥

मेघे[3] गडेरो, गुडके गुडेरोऽथ दशेरवाक् ।
हिंस्रे,

**कुम्बेर्नलोपश्च ॥ १—६० ॥**

कुबेरो यक्षाणां पत्यौ

**शदेस्त च ॥ १—६१ ॥**

वैरी शतेरवाक् ॥ ६८ ॥

**मूलेरादयः ॥ १—६२ ॥**

मूलेरो राजघटयो, रक्षके तु गुधेरवाक् ।
मुहेरो बालिशो स्यात् तु गुहेरो लोहघातके ॥ ६९ ॥

---

1 विजितः B   2 तत्र लतायां T
3 मधे T

**कबेरोतच् पश्च ॥ १—६३ ॥**

कपोतः पक्षिमात्रे स्यात् पारावतमयूरयोः ।

**भातेर्डवतुप्[1] ॥ १—६४ ॥**

सम्बोध्यप्राणिनि भवान्

**कठिचकिभ्यामोरन् ॥ १—६५ ॥**

कठोरः कठिनेऽपि च ॥ ७० ॥

पूर्णे, चकोरो विहगभेदे

**किशोरादयश्च ॥ १—६६ ॥**

अथाश्वस्य शावके ।
तैलपर्ण्यां युवावस्थे किशोरोऽपि दिवाकरे ॥ ७१ ॥

साधौ सहोरो

**कपिगडिगण्डिकटिपटिभ्य ओलच्[2] ॥ १—६७ ॥**

वदनैकदेशे तु कपोलवाक् ।
स्यातां गडोलगण्डोलौ[3] गुडके पिटकेऽन्त्यजे ॥ ७२ ॥

कण्डोलोऽथ कटोलः स्यात् कटावपि कलिङ्गके ।
पटोलं वस्त्रभेदे नौषधौ ज्योत्स्यां तु योषिति ॥ ७३ ॥

कल्लोलः पुंसि हर्षे स्यात् महत्सूर्मिषु वारिणः ।

**मीनातेरूरन् ॥ १—६८ ॥**

शिखावले मयूरः स्यात्

**स्यन्देः सम्प्रसारणं च ॥ १—६९ ॥**

सिन्दूरं रक्तचूर्णके ॥ ७४ ॥

---

1 डवतुः Sid. Sv. omits the Sūtra
2 कोलच् Sid ; ओलक् Sv. & N ; ओलः Daśapādi (8-105)
3 सहोरो....गण्डोलौ is repeated in B

सिन्दूरी रोचनारक्तवल्लिकाधातकीषु च ।
सिन्दूरस्तरुभेदे ना

**सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ १—७० ॥**

सेतुर्नालौ कुमारके ॥ ७५ ॥

तन्तुः सूत्रेऽथ पथिके गन्तुर्दध्यप्सु मस्तु च ।
सक्तुर्यवविकारेऽस्त्री, मार्जारे त्वोतुः, इन्द्रिये ॥ ७६ ॥

शब्दयोनिमहाभूततद्गुणेषु रसादिषु ।
मनःशिलादौ श्लेष्मादौ धातुर्ना गैरिकेऽस्थि च ॥ ७७ ॥

शृगाले वञ्चके क्रोष्टा

**पः किच्च ॥ १—७१ ॥**

पीतुर्वह्नौ दिवाकरे ।

**अर्तेश्च तुः ॥ १—७२ ॥**

आर्तवे भासि च पुमानृतुर्वर्षादिषट्सु च ॥ ७८ ॥

**कमिमनिजनिगाभायाहिभ्यश्च ॥ १—७३ ॥**

कन्दर्पचित्तयोः[1] कन्तुर्मनुष्ये तु प्रजापतौ ।
मन्तुर्ज्ञानागसोः पुंसि, जन्तुर्जीवेऽथ रोषणे[2] ॥ ७९ ॥

त्रिषु गातुः पिके भृङ्गे गन्धर्वे गायने च ना ।
भातुर्ना किरणे सूर्ये, यातुरध्वगकालयोः ॥ ८० ॥

नपुंसकं राक्षसे स्यात्, हेतुर्ना कारणे मतः ।

**चायः किः ॥ १—७४ ॥**

केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि ॥ ८१ ॥

---

1 चित्रयोः A          2 शोषणे T

**आप्नोतेर्ह्रस्वश्च ॥ १—७५ ॥**

अप्सुः शरीरे लषिते

**वसेस्तुन् ॥ १—७६ ॥**

वस्त्वर्थे

**अगारे णिच्च ॥ १— ७७ ॥**

वास्तुरस्त्रियाम् ।

गृहभूमौ

**कृञः क्रतुः ॥ १—७८ ॥**

क्रतुर्यज्ञे मुनौ सङ्कल्पे

**एधिवह्योश्चतुः ॥ १—७९ ॥**

एधतुः ॥ ८२ ॥

पुरुषे, वहतुस्तु स्यात् पथिके वृषभे पुमान् ।

**जीवेरातुः ॥ १—८० ॥**

जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे ॥ ८३ ॥

**आतृकन्वृद्धिश्च ॥ १—८१ ॥**

जैवातृकोऽब्जे वैद्ये च कर्षकायुष्मतोः त्रिषु ।

**कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥ १—८२ ॥**

कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्याल्पखातयोः ॥ ८४ ॥

चमूः सैन्ये, तनूर्देहे, धनूः शस्त्रेऽथ विद्युति ।
रुद्रे स्वर्गे विधौ वैद्ये सर्जूः, खर्जूस्तु पामनि ॥ ८५ ॥

खर्जूर्यां कीटभेदे[1] स्त्री

**मृजेर्गुणश्च ॥ १—८३ ॥**

मर्जूः शुद्धौ च धावके ।

---

1 काष्ठभेदे A

**खडेर्डुङ्वा ॥ १—८४ ॥**[1]

खड्डूः खड्डूश्च मृतकशय्या, नष्टेन्दुमा कुहूः ॥ ८६ ॥

**वहेर्धश्च ॥ १—८५ ॥**

वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च ।

**कषेश्छश्च १—८६ ॥**

कच्छूः पामनि

**णित् कसिपद्यर्तेः ॥ १—८७ ॥**

कासूस्तु[2] बुद्धौ विकलवाग्रुजोः ॥ ८७ ॥

शक्तौ, चरणधारण्यां पादूरारूस्तु[3] पिङ्गले ।

**अणौ डश्च ॥ १—८८ ॥**

आडूर्जलप्लवद्रव्ये

**नञि लम्बेर्नलोपश्च ॥ १—८९ ॥**

अलाबूस्तुम्ब्यां स्त्रियां पुनः ॥ ८८ ॥

**के श्र एरङ् चास्य ॥ १—९० ॥**

कशेरूस्तृणकन्दे पुंक्लीबयोः स्यात् कशेरु च ।

**तौ दुट् च**[4] **॥ १—९१ ॥**

हस्ते दारुणि तर्दूः स्यात्

**दरिद्रातेर्यालोपश्च ॥ १—९२ ॥**

दर्द्रूः स्यात् कुष्ठभिद्यपि ॥ ८९ ॥

---

1 खडेश्च Sv. & N. Ujj. says—इदं सूत्रं न सम्मतं सर्वत्र ।
2 पामनिका कासुः B
3 आरूश्च T
4 दुक् च Ujj. & Sv

दद्रुर्दर्दूश्च दर्दुश्च स्त्रियां

**नृतिशृध्योः कूः ॥ १—९३ ॥**

स्यान्नर्तके नृतूः ।

शृधूर्गुदे

**ऋतेरम् च ॥ १—९४ ॥**

देवनद्यां रतूः स्यात् सत्यवाचि च ॥ ९०

**अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः[1] ॥ १—९५ ॥**

अन्दूः स्त्रियां स्यान्निगडे बुद्धौ भूषणभिद्यपि ।
दृम्भूर्दृन्भूश्च कथके सन्दर्भस्य च कारके ॥ ९१ ॥

तरौ सर्पे कपौ दृन्फूर्जम्बूर्जम्बुस्तरोर्भिदि ।
श्लेष्मातके कफेलूः स्यात्, कर्कन्धूर्बदरीतरौ ॥ ९२ ॥

द्विरूढायां तु दिधिषूर्दृम्फूर्भुजगभिद्यपि ।
कम्बूः परद्रव्यहरे

**मृग्रोरुतिः ॥ १—९६ ॥**

श्वसने मरुतो मरुत् ॥

[ मारुतश्च गरुत्पक्षे गरुत्मान् मतुपीष्यते ][2] ॥ ९३ ॥

**ग्रो मुट् च[3] ॥ १—९७ ॥**

गर्मुत् स्त्री स्वर्णलतयोस्तृणभेदे

**हृषेरुलच् १—९८ ॥**

अथ हर्षुलः ।

मृगकामुकयोश्चारौ चटुलं

---

1 ....दृन्फू....जम्बूकम्बूकफेलू Ujj.
2 This line is omitted in A
3 गर्मुद् च Sv.

**हसृरुहियुषिभ्य इतिः ॥ १—९९ ॥**

न स्त्रियां तृणे ॥ ९४ ॥

हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः ।

सरिन्नद्यां, लताभेदे मृग्यां रोहित् स्त्रियां, नरि ॥ ९५ ॥

अर्के

**ताडेर्णिलुक् च**[1] **॥ १—१०० ॥**

तडिद्विद्युति स्यात्

**शमेर्ढः ॥ १—१०१ ॥**

शण्ढः स्यात् पुंसि गोपतौ ।

आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि ॥ ९६ ॥

**कमेरठः ॥ १—१०२ ॥**

कमठः कच्छपे पुंसि भाण्डभेदे नपुंसके ।

जरठः कठिने पाण्डौ जीर्णे स्यात् कर्कशेऽन्यवत् ॥ ९७ ॥

प्रशान्तौ शमठो

**रमेर्वृद्धिश्च ॥ १—१०३ ॥**

हिङ्गुद्रव्ये स्याद्रामठं

**शमेः खः ॥ १—१०४ ॥**

निधेः ।

भेदे नखे ललाटास्थि शङ्खः कम्बौ तु न स्त्रियाम् ॥ ९८ ॥

**कणेष्ठः ॥ १—१०५ ॥**

कण्ठो गले सन्निधाने ध्वनौ मदनपादपे ।

**कलस्तृपश्च ॥ १—१०६ ॥**

लतायां तृपला, स्यात्तु तृफला च फलत्रिके ॥ ९९ ॥

---

1. ताटेर्णिलुक् Sv. & N. S. says—चौरादिकः तट आघात इति टान्तोऽयं वृत्तावुक्तः ।

**शपेर्बश्च ॥ १—१०७ ॥**

व्यामिश्रवर्णे शबलोऽर्जुने तु स्याद् बृहन्नला ।

**वृषादिभ्यश्चित् ॥ १—१०८ ॥**

वृषलस्तुरगे शूद्रे, पललं पङ्कमांसयोः ॥ १०० ॥

तिलचूर्णे राक्षसे नाथोदारावक्रयोस्त्रिषु ।
सरलः पूतिकाष्ठे ना, तरलो हारमध्यगे ॥ १०१ ॥

चलेऽथ कम्बलो नागराजे प्रावारसास्नयोः ।
कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम् ॥ १०२ ॥

मुसलं स्यादयोग्रे च पुंनपुंसकयोः स्त्रियाम् ।
तालमूल्यामाखुपर्णीगृहगोधिकयोरपि ॥ १०३ ॥

मुषलं मुसलं चैवं, लाङ्गलं कुसुमान्तरे ।
ताले हले गेहकाष्ठे लाङ्गली जलपिप्पली[1] ॥ १०४ ॥

कुट्मलः कुड्मलः[2] क्लीबे नरके मुकुले पुमान् ।
अधर्मे कश्मलं स्यात्तु कोमलं मृदुले जले ॥ १०५ ॥

कोसलः कोशलो देशभेदे, सम्बलशम्बलौ ।
कुले मार्गव्ययद्रव्ये मत्सरे चास्त्रियामुभौ ॥ १०६ ॥

कदलाकदलौ पृश्न्यां कदलीकदलौ पुनः ।
रम्भावृक्षेऽथ कदली पताकामृगभेदयोः ॥ १०७ ॥

कदला डिम्बिकायां च कदलं कदलीफले ।
ना रुद्रे नागभेदे च चण्डांशोः पारिपार्श्वके ॥ १०८ ॥

निधिभेदे कपावग्नौ पिङ्गलः कपिलेऽन्यवत् ।
स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च ॥ १०९ ॥

पर्यासौ सुकृते क्षेमे कुशलं शिक्षिते त्रिषु ।

---

1. लाङ्गकाङ्गजपिप्पली A. लाङ्गला गजपिप्पली T
2. कुट्मलं कुड्मलं T

धवलो ना वृषश्रेष्ठेऽन्यवत् शुक्ले च सुन्दरे ॥ ११० ॥

गवि स्त्री कमलं ताम्रे सलिले व्योम्नि भेषजे ।
'सरोजे मृगभेदे ना स्त्री तु लक्ष्मीवरस्त्रियोः ॥ १११ ॥

मण्डलं परिधौ कोठे[1] देशे द्वादशराजके ।
क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे ॥ ११२ ॥

कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च ।
छदिर्द्दग्रोगतिलकपिटकेषु परिच्छदे ॥ ११३ ॥

पटलं पुंसि नो वृन्दे छलं स्खलितशाठ्ययोः ।
मर्द्दलो वाद्यभेदे स्याद्देवाजीवे तु देवलः ॥ ११४ ॥

पेशलः सुन्दरे स्निग्धे, केवलस्त्वसहायके ।
ग्रासे स्यात् कवलो बुद्धदेवतायां[2] तु जम्भलः ॥ ११५ ॥

**मृजेष्टिलोपश्च** ॥ १—१०९ ॥

मलोऽस्त्रियां पापविष्टाकिट्टेषु कृपणेऽन्यवत् ।

**चुपेरच्चोपधायाः** ॥ १—११० ॥

चपलः पारदे मीने चोरके प्रस्तरान्तरे ॥ ११६ ॥

चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च ।
नपुंसकस्तु शीघ्रे स्यात् वाच्यवत्तरले चले ॥ ११७ ॥

**शकिशम्योर्नित्** ॥ १—१११ ॥

शकलं त्वचि खण्डे स्यात् रागवस्तुनि वल्कले ।
शमलं पापशकृतोः

**छो गुक् ह्रस्वश्च** ॥ १—११२ ॥

छगलश्छागलश्च ना ॥ ११८ ॥

छागे क्लीबे नीलवस्त्रे छगली वृद्धदारके ।

**अमन्तात् डः** ॥ १—११३ ॥

---

1 कोटे A ; कोशे T ; कीटे B   2 वृद्धदेवतायां A, B & T

दण्डोऽस्त्री लगुडे सैन्यसूर्यपार्श्वगयोः पुमान् ॥ ११९ ॥

रण्डा मूषिकपर्ण्यां च विधवायां च योषिति ।
खण्डोऽस्त्री शकले, नेक्षुविकारमणिभेदयोः ॥ १२० ॥

क्लीबस्तु कश्मले, वण्डो दुश्चर्मछिन्नहस्तयोः ।
वण्डा तु पांसुलायां स्त्री त्रिषु हस्तादिवर्जिते ॥ १२१ ॥

मण्डः पञ्चाङ्गुले[1] शाकभेदे क्लीबं तु मस्तुनि ।
पञ्चादिसङ्घे षण्डोऽस्त्री शण्डश्च नरि गोपतौ ॥ १२२ ॥

अण्डमस्त्री मुष्कपेश्योर्गण्डः स्यात् पुंसि खड्गिनि ।
ग्रहयोगप्रभेदे च वीथ्यङ्गे पिटकेऽपि च ॥ १२३ ॥

चिह्नवीरकपोलेषु बुद्बुदे हर्षभूषयोः ।
चण्डो ना तिन्त्रिणीवृक्षे[2] यमकिङ्करदैत्ययोः ॥ १२४ ॥

चण्डी कात्यायनीदेव्यां हिंस्राकोपनयोषितोः ।
चण्डा धनहरीशङ्खपुष्प्योस्त्रिष्वतिकोपने ॥ १२५ ॥

तीव्रेऽपि, पण्डः शण्ढे स्त्री बुद्धौ, फण्डस्तु गन्तरि ।

**क्वादिभ्यः[3] कित् ॥ १—११४ ॥**

कुण्डमग्न्यालये मानभेदे[4] देवजलाशये ॥ १२६ ॥

कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान् ।
पिठरे तु न ना, काण्डमस्त्री दण्डेषुवारिषु ॥ १२७ ॥

कुत्सितेऽवसरे वर्गे वृक्षभेदे रहस्यपि ।
नाडीवृन्दे तरुस्कन्धे[5] स्तम्बे, गुण्डस्त्वलौ भवेत् ॥ १२८ ॥

गुडः स्यात् गोलके हस्तिसन्नाहेक्षुविकारयोः ।
गुडा स्नुह्यां च कथिता[6] गुडिकायां च योषिति ॥ १२९ ॥

---

1. मण्डपं चाङ्गले A.
2. तिनिशींवृक्षे B.
3. कुणादिभ्यः Sv.
4. ध्यानभेदे T.
5. तरोः स्कन्धे T.
6. गदिता T.

**स्थाचतिमृजेरालञ्वालञालीयचः ॥ १—११५ ॥**

स्थालं भाजनभेदेऽपि स्थाली स्यात् पाटलोखयोः[1] ।
चात्वालो यज्ञकुण्डे स्याद्दर्भेऽथो कायशोधने[2] ॥ १३० ॥

बिडाले वरवर्णे च मार्जालीयः स्मृतो बुधैः ।

**पतिचण्डिभ्यामालञ् ॥ १—११६ ॥**

पातालं नागलोके स्याद्विवरे बडबानले ॥ १३१ ॥

चाण्डालो नीचजातौ स्यात्

**तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् ॥ १—११७ ॥**

तापिञ्छे वारुणद्रुमे ।
तमालस्तिलके खङ्गे, विशालो नृपवृक्षयोः ॥ १३२ ॥

भेदे स्त्री त्विन्द्रवारुण्यामुज्जयिन्यां, विशेष्यवत् ।
पृथुलेऽथ बिडालः स्यान्नेत्रपिण्डाखुवैरिणोः ॥ १३३ ॥

मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे ।
कुलालः ककुभे कुम्भकारे, स्त्री त्वञ्जनान्तरे ॥ १३४ ॥

कपालोऽस्त्री शिरोस्थ्नि स्याद्घटादेः शकले व्रजे ।
पलालं तृणभेदे स्यात् , पञ्चालो जनदेशयोः ॥ १३५ ॥

पञ्चाली पुत्रिकागीत्योः शालो नरि झषे, स्त्रियाम् ।
स्यात्तरुस्कन्धशाखायां गृहगेहैकदेशयोः ॥ १३६ ॥

**पतेरङ्गच् पक्षिणि ॥ १—११८ ॥**

पतङ्गः शलभे शालिभेदे पक्षिसूर्ययोः ।
क्लीबं सूते

**तरत्यादिभ्यश्च ॥ १—११९ ॥**

तरङ्गोऽश्वाद्युत्फाले वस्त्रभङ्ग्योः[3] ॥ १३७ ॥

---

1. पादलेखयोः T.
2. कामशोधने A.
3. वस्त्रभृङ्गयोः T.

लवङ्गं देवकुसुमे

**विडादिभ्यः कित् ॥ १—१२० ॥**

विडङ्गो नागरे त्रिषु ।

कृमिघ्नेऽस्त्री, मृदङ्गस्तु भवेत् पटहघोषयोः ॥ १३८ ॥

मृगे कुरङ्गः

**सुवृञोर्वृद्धिश्च ॥ १—१२१ ॥**

सारङ्गो हरिणे चातके गजे ।

शबले त्रिषु, खङ्गादिमुष्टौ वारङ्ग एव च ॥ १३९ ॥

यमजे प्राणिनि विटे नागरङ्गद्रुमे रसे ।

पिप्पल्याश्चापि नारङ्गो

**गन् गम्यद्योः ॥ १—१२२ ॥**

गङ्गा शम्भुशिरोजले ॥ १४० ॥

भवेदङ्गः पुरोडाशो चाङ्ग सम्बोधनेऽव्ययम् ।

अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति ॥ १४१ ॥

क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ।

**छापूखडिभ्यः कित् ॥ १—१२३ ॥**

छागोऽजे, क्रमुके वृन्दे पूगः, खड्गस्तु गण्डके ॥ १४२ ॥

तच्छृङ्गे बुद्धभेदेऽसौ,[1] षिड्गस्तरलचेतसि ।

**भृञः कित्, नुट् च ॥ १—१२४ ॥**

भृङ्गो मधुव्रते भृङ्गराजे धूम्याटषिड्गयोः ॥ १४३ ॥

स्याद्गुडत्वचि तत्[2] क्लीबे

**भृणातेर्ह्रस्वश्च ॥ १—१२५ ॥**

अथ शृङ्गः कूर्चशीर्षके ।

---

1. भेदेऽपि T. 2. तु. T.

स्त्री विषायां स्वर्णमीनभेदयोः ऋषभौषधौ ॥ १४४ ॥

क्लीबे प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके ।

विषाणोत्कर्षयोः

**गण् शकुनौ ॥ १—१२६**

शार्ङ्गः शारङ्गश्चापि पक्षिणि ॥ १४५ ॥

**मुदिग्रोर्गग्गौ ॥ १—१२७ ॥**

मुद्गः सस्ये, मुनौ गर्गः

**अण्डन् कृसृभृवृञः ॥ १—१२८ ॥**

करण्डः पुष्पभाजने ।

असौ कारण्डवे चापि मधुकोशे दलाढके ॥ १४६ ॥

सरण्डः सरटे धूर्ते विहगे भूषणान्तरे ।

भरण्डं[1] स्वामिनि भवेद्वरण्डो मुखरोगके ॥ १४७ ॥

समूहे चान्तरावेदौ, तरण्डो जलतारके ।

बडिशीसूत्रबन्धेन युक्ते काष्ठादिकेऽपि सः ॥ १४८ ॥

हीने पितृभ्यां छेमण्डः, शयण्डः शयितर्यपि ।

**शृदृभसोऽदिः ॥ १—१२९ ॥**

शरदृत्वन्तरे स्त्र्यब्दे, दरदूभीभृग्वगेषु च ॥ १४९ ॥

भास्वरे जघने योनौ भसत्, पर्षच्च संसदि ।

**दृणातेः षुक् ह्रस्वश्च ॥ १—१३० ॥**

दृषन्निष्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम् ॥ १५० ॥

**त्यजितनियजिभ्यो डित् ॥ १—१३१ ॥**

त्यत्तत्परोक्षेऽनुद्देश्ये यद्

**एतेस्तुट् च ॥ १—१३२ ॥**

---

1. भरण्डः T. B.

एतदपरोक्षके ।

**सर्तेररटिः ॥ १—१३३ ॥**

सरट् स्यात्सरटे वाते मेघे च मधुनस्तथा ॥ १५१ ॥

मक्षिकायां

**लङ्घेर्नलोपश्च ॥ १—१३४ ॥**

लघड्वायौ

**पारेरजिः ॥ १—१३५ ॥**

पारक् स्वर्णे

**प्रथः कित्सम्प्रसारणं च ॥ १—१३६ ॥**

अव्ययं पृथक् ।

भिन्ने

**भियः षुक् ह्रस्वश्च ॥ १—१३७ ॥**

अथ स्याद्भिषग्वैद्ये

**युष्यसिभ्यां मदिक् ॥ १—१३८ ॥**

त्वं सम्बोध्ये, प्रतीच्यहम् ॥ १५२ ॥

**अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ॥ १—१३९ ॥**

अर्मश्चक्षूरुजि, स्तोमः सङ्घे, सोमोऽत्रिनेत्रजे ।
वानरे च कुबेरे च पितृदेवे समीरणे ॥ १५३ ॥

वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ ।
होमो हुतौ, गतौ सर्मो, धर्मोऽस्त्र्याचारपुण्ययोः ॥ १५४ ॥

नयेऽहिंसोपनिषदोः स्वभावोपमयोः क्रतौ ।
ना यमे सोमपे चापे, क्षेमं तु कुशले भवेत् ॥ १५५ ॥

क्षौममट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांशुके ।
शणजेऽतसिजे, भामः क्रोधचण्डांशुदीप्तिषु ॥ १५६ ॥

यामस्तु पुंसि प्रहरे संयमेऽपि च कीर्तितः ।
वामं धने पुंसि हरे कामदेवे पयोधरे ॥ १५७ ॥

वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ ।
वामी शृगालीवडवारासभीकरभीषु च ॥ १५८ ॥

पद्मोऽस्त्री पद्मके व्यूहे निधिसङ्ख्यान्तरेऽम्बुजे ।
ना नागे, रोगराजे स्याद्यक्ष्मो, नेमोऽर्धगर्तयोः ॥ १५९ ॥

प्राकारे कैतवे कीलेऽवधौ

**जहातेः सन्वदालोपश्च ॥ १—१४० ॥**

जिह्मं नपुंसकम् ।
तगराभिधवृक्षे स्यात्, जिह्मः कुटिलमन्दयोः ॥ १६० ॥

**अवतेष्टिलोपश्च ॥ १—१४१ ॥**

ओं प्रश्नेऽङ्गीकृतौ रोषे परमात्मन्युपक्रमे ।

**ग्रसेरा च ॥ १—१४२ ॥**

ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकः ॥ १६१ ॥

संपूर्वः संयुगे च

**अविसिविसिशुषिभ्यः कित् ॥ १—१४३ ॥**

ऊमं नगरं तर्पके तु ना[1] ।
स्यूमो रश्मौ सूत्रतन्तौ, सिमः कृत्स्नेऽथ तेजसि ॥ १६२ ॥

बले शुष्मं रवावग्नौ समीरेऽपि च पुंसि सः ।

**इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥ १—१४४ ॥**

कामे वसन्त ईष्मेष्मौ, युध्मो धनुषि संयुगे ॥ १६३ ॥

शरे योद्धरि चेध्मस्तु समित्सङ्घेऽथ पावके ।
यजमाने दर्शनीये स्याद्दस्मोऽपि च तस्करे ॥ १६४ ॥

---

1. च ना B.

श्यामो वटे प्रयागस्य वारिदे वृद्धदारके ।
पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु ॥ १६५ ॥

मरिचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ ।
अप्रसूताङ्गनायां च प्रियङ्गावपि गुग्गुलौ ॥ १६६ ॥

यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ ।
नीलिकायां कणायां च धूमः स्यादग्निसम्भवे ॥ १६७ ॥

सूमोऽन्तरिक्षे, ईर्मं तु व्रणे, जन्म तु जन्मनि ।
शीमो वृक्षे

**युजिरुचितिर्जां कुश्च ॥ १—१४५ ॥**

युगे युग्मं, रुक्मं काञ्चनलोहयोः ॥ १६८ ॥

तिग्मं तीक्ष्णे

**हन्तेर्हि च ॥ १—१४६ ॥**

हिमं शीते मलयोद्भवचन्दने ।

शीतले वाच्यलिङ्गः स्यात्

**भियः षुग्वा ॥ १—१४७ ॥**

भीष्मो गाङ्गेयघोरयोः ॥ १६९ ॥

भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे ।

**घर्मः ॥ १—१४८ ॥**

घर्मः स्यादातपे ग्रीष्मेऽप्युष्णस्वेदाम्भसोरपि ॥ २७० ॥

**ग्रीष्मः ॥ १—१४९ ॥**

ऊष्मर्तुभेदयोर्ग्रीष्मः

**प्रथेः षिवन् सम्प्रसारणं च ॥ १—१५० ॥**

पृथिवीपृथवी[1] क्षितौ ।

---

1, प्रथिवीपृथिवी T.

**अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ॥ १—१५१ ॥**

पुंभेदवाजिनोरश्वः, प्रुष्वः स्यादृतुसूर्ययोः ॥ १७१ ॥

जलस्य कणिकायां स्त्री, लट्वावद्ये खगान्तरे ।
फले करञ्जभेदेऽथ कण्वं पापे मुनौ पुमान् ॥ १७२ ॥

शीधौ बीजाद्ययोः किण्वं, खट्वा शयनसाधने ।
विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकम् ॥ १७३ ॥

न ना शुण्ठ्यां पुंसि देवप्रभेदेऽप्यखिले त्रिषु ।

**इण् शीङ्भ्यां वन् ॥ १—१५२ ॥**

एवो गन्तर्यव्ययं तु भवेदेवावधारणे ॥ १७४ ॥

शेवं सुखे च मेढ्रे च

**सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे ॥ १—१५३ ॥**

सर्वः कृत्स्ने, निघृष्ववाक् ।
खुरे, रिष्वस्तु हिंस्रे स्यात् लष्वलिष्वौ तु नर्तके ॥ १७५॥

शिवं मोक्षे सुखे भद्रे सलिलेऽथ शिवो हरे ।
वेदे योगान्तरे कीले वालुके[1] गुग्गुलावपि ॥ १७६ ॥

पुण्डरीकद्रुमे चापि शिवा झाटामलौषधौ ।
अभयामलकीगौरीक्रोष्टीसक्तुफलासु च ॥ १७७ ॥

पद्वो भूलोकरथयोर्विनीते प्रह्व, इष्ववाक् ।
आचार्ये, एवमीष्वोऽपि, ह्रस्वो वामननीचयोः ॥ १७८ ॥[2]

**शेवायह्वजिह्वाग्रीवाप्वामीवाः ॥ १—१५४ ॥**

शेवा लिङ्गाकृतौ, यह्वो यजमानेऽथ यह्ववाक् ।
महति स्यादथो जिह्वा शब्दोच्चारणसाधने ॥ १७९ ॥

---

1. बालके T.
2. In T. the order of the next four lines is confused.

शिरोधरायां ग्रीवाप्वा कण्ठस्थानसमीरयोः ।
मीवोदरक्रिमौ वायावमीवं दुःखपापयोः ॥ १८० ॥

**कृगृशृदृभ्यो वः ॥ १—१५५ ॥**

कर्व आखौ स्मरे, गर्वोऽहङ्कारे, शर्ववाक् शिवे ।
दर्वोऽस्रपे

**कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥ १—१५६ ॥**

कृतबले श्रेष्ठे च तरुणे युवा ॥ १८१ ॥

वृषा कर्णे महेन्द्रे ना, भवेत्तक्षा तु वर्धकौ ।
राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ ॥ १८२ ॥
यक्षे शक्रेऽथ धन्व स्यात् स्थले चापे मरौ तु ना ।
द्युवा सूर्ये, प्रतिदिवा दिवसे कितवेऽपि च ॥ १८३ ॥
बहुत्वभेदवत्सु स्युः सप्ताष्ट

**नञि जहातेः ॥ १—१५७ ॥**

अहर्दिनेऽपि च ।

**श्वन् उक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन् मज्जन् अर्यमन् विश्वप्सन् परिज्मन्[1] मातरिश्वन् मघवन्निति ॥ १—१५८ ॥**

भषके श्वा, वृषे तूक्षा, पूषा दन्तकसूर्ययोः ॥ १८४ ॥
प्लीहा कुक्षिभवव्याधौ, क्लेदौषधिशशाङ्कयोः ।
स्नेहा सुहृदि चन्द्रे च, मूर्धा शिरसि, मज्जया ॥ १८५ ॥
मज्जास्थिसारे, सूर्ये तु पितृदेवान्तरेऽर्यमा ।
विश्वप्साग्नौ च देवे च, परिज्मा वह्निचन्द्रयोः ॥ १८६ ॥

---

1 परिज्वन् Ujj. Perusūri says—
केचित् तु जोर्यणादेशे परिज्वेति बभाषिरे ।
न तत् साधु यतो लक्ष्यविरोधः सर्वतः स्फुटः ॥

परितो गन्तरीन्दौ तु परिज्वाथ प्रभञ्जने ।
मातरिश्वाऽथ मघवा देवेन्द्रे, दश पञ्च च ॥ १८७ ॥

नव सङ्ख्याभिधावस्तु त्रयस्त्रिषु सरूपकाः ॥

इत्युणादिकोशे

प्रथमपादीयनामसंग्रहः ॥

---

श्रीः

## ॥ अथ द्वितीयः पादः ॥

**कृहृभ्यामेणुः ॥ २—१ ॥**

करेणुरिभ्यां स्त्री नेभे, गन्धद्रव्ये हरेणुवाक् ॥ १८८ ॥
हरेणुर्ना सतीने स्त्री[1] रेणुकाकुल्योषितोः ।

**हनिकुषिनीरमिकाशिभ्यः क्थन् ॥ २—२ ॥**

हथो विषण्णे, कुष्ठं तु सुगन्धे पुष्करे रुजि ॥ १८९ ॥
नीथः स्तोत्रे नेतरि च, रथः स्यन्दनकाययोः ।
वेतसेऽङ्घ्रावयवे, काष्ठा दिक्स्थानमात्रयोः[2] ॥ १९० ॥
अपि दारुहरिद्रायां कालमानप्रकर्षयोः ।
क्लीबे दारुणि

**अवे भृञः ॥ २—३ ॥**

अवभृथो यज्ञभेदावसानयोः ॥ १९१ ॥

---

1. सतां मे स्त्री A.
2. मानयोः T.

**उषिकुषिगर्तिभ्यस्थन् ॥ २—४ ॥**

ओष्ठोऽधरेऽथ कोष्ठस्तु स्यादात्मीयकुसूलयोः ।
गृहमध्ये कुक्षिमध्ये कोष्ठं कुक्षौ नपुंसके ॥ १९२ ॥

गाथा श्लोके संस्कृतान्यभाषार्याशेषवृत्तयोः ।
अर्थोऽर्थनायां विषये धनकारण[1]वस्तुषु ॥ १९३ ॥

अभिधेये च शब्दानां निवृत्तौ च प्रयोजने ।
शोथः स्यात् श्वयथौ

**सर्तेर्णिच्च ॥ २—५ ॥**

सार्थो वणिक्सङ्घसमूहयोः ॥ १९४ ॥

**जृवृञ्भ्यामूथन् ॥ २—६ ॥**

मांसे जरूथं[2] दैत्यस्य भेदे ना, अथ वरूथवाक् ।
रथगुप्तौ नरि क्लीबे तनुत्राणे रथे गृहे ॥ १९५ ॥

**पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥ २—७ ॥**

पीथो रवौ, घृते पीथं, तीर्थमध्वरमन्त्रिणोः ।
क्षेत्रोपाध्याययोः शास्त्रेऽवतारोपाययोरपि ॥ १९६ ॥

ऋषिजुष्टजले पात्रे स्यात् स्त्रीणामार्तवेऽपि च ।
तुत्थोऽञ्जनभेदे[?] त्वग्नौ नीलीसूक्ष्मैलयोः स्त्रियाम् ॥ १९७ ॥

उक्थं सामान्तरे, रिक्थं दायादधनगर्मुतोः ।
धने, सिक्थं मधूच्छिष्टे सिक्थो भक्तपुलाकके ॥ १९८ ॥

ऋक्थमर्थेषु रिक्थस्य,[3]

**अर्तेर्निरि ॥ २—८ ॥**

निर्ऋथः सामहिंसयोः ।

---

1. वारण B.
2. जरूथो T.
3. रिक्थं स्यात् T.

**निशीथगोपीथावगथाः ॥ २—९ ॥**

निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके ॥ १९९ ॥

तीर्थे च सोमपाने च गोपीथः, सोमपीथवाक् ।

सोमस्य पाने, अवगथः प्रातःस्नाने प्रकीर्तितः ॥ २००॥

प्रातः सवने

**गश्चोदि ॥ २—१० ॥**

उद्गीथः सामांशे प्रणवेऽपि च ।

**समीणः ॥ २—११ ॥**

समिथः सङ्गते वह्नौ सङ्ग्रामे तन्नपुंसके ॥ २०१ ॥

**तिथपृष्ठगूथयूथप्रोथाः ॥ २—१२ ॥**

तिथः कामेऽनले, पृष्ठं चरमस्तोत्रभेदयो ।

देहस्य चरमे, गूथं विशि, यूथी कुरण्टके ॥ २०२ ॥

कर्णपुष्पभिदोर्यूथं स्यात्तिर्यक्सङ्घसङ्घयोः ।

अध्वगे त्रिषु ना कट्यां प्रोथोऽस्त्र्यश्वास्यनासयोः ॥ २०३ ॥

**स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवहि[1]वसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥ २—१३ ॥**

स्फारः स्यात् पुंसि निकटे करकादेश्च बुद्बुदे ।

प्रभूते त्रिषु, तक्रं तु मथिते पादवारिणि ॥ २०४ ॥

वक्रो दुष्टेऽनृजौ क्रूरे जटिले ना शनैश्चरे ।

क्लीबं पुटान्तरे, शक्रो देवेन्द्रे कुटजेऽर्जुने ॥ २०५ ॥

क्षिप्रं शीघ्रेऽधमक्रूरकृपणाल्पेषु तु त्रिषु ।

क्षुद्रो व्यङ्गानटीकण्टकारिकासरघासु तु ॥ २०६ ॥

---

1. वहि omitted in all *Pañcapādi* texts of Uṇādi; Mahādeva has taken it from *Daśapādi* (8—31).

धाङ्करीवेश्ययोर्हिंस्रामक्षिकामात्रयोः स्त्रियाम् ।
सृप्रश्चन्द्रेऽथ तृप्रः स्यात् पुरोडाशे नपुंसकम् ॥ २०७ ॥
दुःखे काष्ठाज्ययोर्दृप्रो बली, वन्द्रस्तु पूजके ।
उद्रो जलचरेऽब्धौ च,[1] श्वित्रं कुष्ठेऽथ दानवे ॥ २०८ ॥
वृत्रो रिपुघनध्वान्तशैलचक्रेष्वपि स्मृतः ।
वीरो भटे, नीरमप्सु, सन्निवेशे तु पद्रवाक् ॥ २०९ ॥
ग्रामे च, मद्रो हर्षे स्याद्देशभेदेऽपि विश्रुतः ।
मुद्रा प्रत्ययकारिण्यां, खिद्रो रोगदरिद्रयोः ॥ २१० ॥
छिद्रं बिलेऽशनौ[2] भिद्रं, ध्वनिभेदे तु मन्द्रवाक् ।
चन्द्रोऽब्जे,[3] दह्रवागग्नौ, दस्रः स्यादाश्विने खरे ॥ २११ ॥
दभ्रः स्वल्पे दरिद्रे च, स्याद्बलीवर्द उह्रवाक् ।
उस्रो वृषे च किरणेप्युस्रार्जुन्युपचित्रयो ॥ २१२ ॥
वाश्रो विहङ्गदिवसपक्षिषु (?) स्यात्तु मन्दिरे ।
चतुष्पथे न द्वयोः, स्त्री तत्र तु प्रस्नुतस्तना ॥ २१३ ॥
शब्दयुक्ता च धेनुर्या, शीरोऽजगरवाचकः ।
हस्रो मूर्खेऽथ सिध्रः स्यात् साधौ वृक्षान्तरेऽपि च ॥ २१४ ॥
शुभ्रं स्यादभ्रके क्लीबेऽन्यवदुद्दीप्तशुक्लयोः ।
मुस्रमश्रुणि, मिश्रं तु मिलिते, धमनौ सिरा ॥ २१५ ॥
पुण्ड्रो दैत्यान्तरेऽथास्रं रक्तेऽश्रं त्वक्षिवारिणि ।

**चकिरम्योरुच्चोपधायाः ॥ २—१४ ॥**

चुक्रं वृक्षाम्ले, चाङ्क्र्यां स्त्री, पुंस्यम्लेऽम्लवेतसे ॥ २१६ ॥
रुम्रोऽरुणे

**वौ कसेः ॥ २—१५ ॥**

---

1. उद्रो जलचरे ब्धौ च A. 2. छिद्रं चिद्रे शलौ T.
3. चन्द्रोजे B;

विकुस्रस्तु चन्द्रे विकस्र इत्यपि ।

**अमितम्योर्दीर्घश्च ॥ २—१६ ॥**

आम्रो वृक्षे फले त्वाम्रं, ताम्रं शुल्बे भवेत्

**निन्देर्नलोपश्च ॥ २—१७ ॥**

शये ॥ २१७ ॥

निद्रा

**अर्देर्दीर्घश्च ॥ २—१८ ॥**

आर्द्रा भान्तरे क्लिन्ने त्रिषु ह्रीबेरके तु तत् ।

**शुचेर्दश्च ॥ २—१९ ॥**

शूद्रः स्याद्वृषले

**दुरीणो लोपश्च ॥ २—२० ॥**

दूरं विप्रकृष्टेऽप्यनव्ययम् ॥ २१८ ॥

**कृतेश्छक्रू च ॥ २—२१ ॥**

कृच्छ्रमाख्यातमाभीले पापसान्तपनादिनोः ।
क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवत् ॥ २१९ ॥

**रोदेर्णिलुक् च ॥ २—२२ ॥**

**बहुलमन्यत्रापि संज्ञाच्छन्दसोः ॥ २—२३ ॥**[1]

ब्रह्मा विधौ, शिवे शम्भुः, स्याच्छुष्मा कृष्णवर्त्मनि ।
रुद्रे शूलधरः, चक्रधरो विष्णौ, शचीपतौ ॥ २२० ॥

वज्रधरः, शक्तिधरः स्कन्दे, दण्डधरो यमे ।
स्यात्तूदकधरो मेघे, स्यात्तु पाशधरोऽम्बुपे ॥ २२१ ॥

---

1. This is taken as a part of the commentary in the Calcutta Edition of Ujj.'s *Uṇādisūtravṛtti*.

स्युः पर्णशोषके पर्णमोचके पर्णरोहके ।
पर्णशुट् पर्णमुक् पर्णरुट् च शब्दाः क्रमादमी ॥ २२२ ॥

**जोरी च ॥ २—२४ ॥**

जीरो हयाणुखड्गेषु जरणे

**सुसूधाग्गृधिभ्यः क्रन् ॥ २—२५ ॥**

अथ सुरोऽमरे ।
मद्येऽपि चषके स्त्री स्यात्, सूरः स्यात् सूर्यवीरयोः ॥ २२३ ॥

धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे ।
स्त्रियां श्रवणतुल्यायां, गृध्रो वै त्रिषु लोभिनि ॥ २२४ ॥

**शुसिचिमीनां दीर्घश्च ॥ २—२६ ॥**

यादवे सुभटे शूरः सूर्येऽथो लाङ्गलार्कयोः ।
सीरश्चीरं वस्त्रभेदे सीरं गोस्तनचूडयोः ॥ २२५ ॥

रेखायां पत्रिकाझिल्योश्चीरी, मीर उदन्वति ।

**वाविन्धेः ॥ २—२७ ॥**

वीध्रं तु विमलेऽग्नौ ना

**वृधिवपिभ्यां रन् ॥ २—२८ ॥**

वध्रं चर्मण्यथास्त्रियाम् ॥ २२६ ॥

वेणुक्षेत्रचये तीरे वप्रः प्राकारतातयोः ।
केदारे च पुमान्

**ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्नेरामालाः ॥ २—२९ ॥**

ऋज्रो गतिशालिनि नायके ॥ २२७ ॥

इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः ।
अग्रं पुरस्तादुपरि परिमाणे पलस्य च ॥ २२८ ॥

आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् ।
अधिके च प्रधाने च प्रथमे चाभिधेयवत् ॥ २२९ ॥

पविहीरकयोर्वज्रमस्त्री, विप्रस्तु भूसुरे ।
कुब्रं वने, मुखे चुब्रं, स्यात् क्षुरः केशकृन्तने ॥ २३० ॥

गोक्षुरे कोकिलाक्षे च खुरः कोलदले[1] शफे ।
भद्रः शिवे खञ्जरीटे वृषे मेरुकदम्बके ॥ २३१ ॥

करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः ।
काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च ॥ २३२ ॥

तिथिभेदे प्रसारिण्यां कट्फलानन्तयोरपि ।
त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे ॥ २३३ ॥

उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे ।
स्त्री वचाक्षुद्रयोर्भेरी दुन्दुभावथ भेलवाक् ॥ २३४ ॥

मुनौ मणौ प्लवे पुंसि भीरावज्ञे च वाच्यवत् ।
शुक्रः स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान् ॥ २३५ ॥

रेतोक्षिरुग्भिदोः क्लीबे, शुक्लो योगान्तरे सिते ।
क्लीबे तु रजते, गौरो ना चन्द्रे श्वेतसर्षपे ॥ २३६ ॥

गौरी त्वसंजातरजःकन्याशङ्करभार्ययोः ।
रोचने रजनीपिङ्गाप्रियङ्गुवसुधासु च ॥ २३७ ॥

पशिस्त्रियां नदीभेदे न द्वयोः पद्मकेसरे ।
स्यात्तु पीतेऽरुणे श्वेते विशुद्धेऽप्यभिधेयवत् ॥ २३८ ॥

अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विता[2] ।
सा गौरी, तत्सुतो यस्तु स गौरः परिकीर्तितः ॥ २३९ ॥

वन्रो विभागिनि, इरा तु जले भूवाक्सुरासु च ।
मालो जात्यन्तरे क्लीबे क्षेत्रे चोन्नतभूतले ॥ २४० ॥

---

1. कोले दले A.

2. समन्विते A, B.

स्त्रियां पृक्कास्रजोस्तीव्रा राजिकागण्डदूर्वयोः ।
तथैव कटुरोहिण्यां त्रिष्वत्युष्णनितान्तयोः ॥ २४१ ॥
कटौ च

**समि कस उकन् ॥ २—३० ॥**

अथो संकसुको दुर्जनास्थिरयोर्भवेत् ।

**पचिनश्योर्णुकन्कनुमौ च ॥ २—३१ ॥**

पाकुकः सूपकारे स्यात्, नंशुको रेणुनाशिनोः ॥ २४२ ॥

**भियः क्रुकन् ॥ २—३२ ॥**

भीरुको भयशीले

**क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥ २—३३ ॥**

अथ रजको धावके शुके ।
स्यादिक्षुकुट्टकस्तस्मिन् यस्य शिल्पं गुडक्रिया ॥ २४३ ॥
चरको मुनिभिद्रन्त्रोः, शुनको भषकः शुनि ।
चषकोऽस्त्री सुरापात्रे मद्यमद्यप्रभेदयोः ॥ २४४ ॥
स्याच्छालभञ्जिका क्रीडावस्त्रपुत्रिकयोरपि ।
तक्षको वर्धकौ स्यात्, ध्रुवको गर्भमोचके ॥ २४५ ॥
तदन्तरे त्वामलकी, चन्द्रके तु कलापकम् ।
मल्लिका पुष्पजातौ स्यात्, कनकं चापि हेमनि ॥ २४६ ॥
कटकं वलये सानौ, लटको दुर्जनेऽपि च ।

**रमे रश्च लो वा ॥ २—३४ ॥**

विलासिनि स्याद्रमको, लमकः स्याद्दषेर्भिदि ॥ २४७ ॥

**जहातेर्द्वे च ॥ २—३५ ॥**

जहकः समये त्यागिन्यपि

**ध्मो धम च ॥ २—३६ ॥**

कर्मारवाचकः ।

धमको,

**हनो वध च ॥ २—३७ ॥**

वधको हिंस्रे

**बहुलमन्यत्रापि ॥ २—३८ ॥**

कुहको दाम्भिके भवेत् ॥ २४८ ॥

मिथ्यार्थे कृतकं, खड्गे भिदकश्छिदकं पवौ ।

मातुलुङ्गे तु रुचकमुञ्झको मेघयोगिनोः ॥ २४९ ॥

लिङ्गको वल्लभे स्यात्तु

**कृषेर्वृद्धिश्चोदीचाम् ॥ २—३९ ॥**

कार्षकः कृषिजीविनि ।

कृषकः पुंसि फाले स्यात् कर्षके त्वभिधेयवत् ॥ २५० ॥

**उदकं च ॥ २—४० ॥**

उदकं के

**वृश्चिकृष्योः किकन् ॥ २—४१ ॥**

शूककीटे राशिभेदे च वृश्चिकः ।

फाले तु कृषिकः

**प्राङि पणिकषः ॥ २—४२ ॥**

प्रापणिकः स्यात् पण्यविक्रयी ॥ २५१ ॥

स्यात् प्राकषिकवाक् मायानर्तके पारदारिके ।

**मुषेर्दीर्घश्च ॥ २—४३ ॥**

मूषिको मूषके

**स्यमेः सम्प्रसारणं च ॥ २—४४ ॥**

वृक्षविशेषे सीमिको मतः ॥ २५२ ॥

**क्रिय इकन् ॥ २—४५ ॥**

क्रयिकः क्रेतरि भवेत्

**आङि पणिपनिपतिखनिभ्यः ॥ २—४६ ॥**

वणिज्यापणिको भवेत् ।

इन्द्रनीले किराते चापनिकः, श्येनपक्षिणि ॥ २५३ ॥

दैवायाते चापतिकोऽथ मूषकवराहयोः ।

आखनिकः

**श्यास्त्याहृञविभ्य इनच् ॥ २—४७ ॥**

अथ श्येनः स्यात् पाण्डुरे विहगान्तरे ॥ २५४ ॥

स्त्येनस्तेनश्च चोरेऽथ सारङ्गे हरिणो नरि ।

हरिणी हरितायां च नारीमिद्वृत्तभेदयोः ॥ २५५ ॥

सुवर्णप्रतिमायां च विशदे त्वभिधेयवत् ।

अध्वर्यावविनः

**वृजेः किच्च ॥ २—४८ ॥**

पापे वृजिनं चिकुरे नरि ॥ २५६ ॥

कुटिले वाच्यवत्

**अजेरज च ॥ २—४९ ॥**

चर्मण्यजिनं

**बहुलमन्यत्रापि ॥ २—५० ॥**

दिवसे दिनम् ।

छिन्नेऽथ नलिनं पद्मे कमलिन्यां नलिन्यपि ॥ २५७ ॥

कठिनमपि निष्ठुरे स्यात् स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम् ।

कठिनी खटिकायामपि कठिना गुडशर्करायां च ॥ २५८ ॥

मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति ।

कुण्डिनं नगरे नर्षौ, द्रुहिणः कमलासने ॥ २५९ ॥

सुपिष्टे मसिनं, फल्यां फलिनी, बर्हिणः खगे ।

**द्रुदक्षिभ्यामिनन् ॥ २—५१ ॥**

द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे ॥ २६० ॥

दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु ।

अवामे याम्य[1] दिग्भूते कुशले चापि वाच्यवत् ॥ २६१ ॥

यज्ञाद्यङ्गद्रव्यदाने तत्कर्मणि दिशि स्त्रियाम् ।

**अर्तेः किदिच्च ॥ २—५२ ॥**

ईरिणं चेरिणं शून्येऽप्यूषरे

**वेपितुह्योर्ह्रस्वश्च ॥ २—५३ ॥**

विपिनं वने ॥ २६२ ॥

शीते तुहिनं

**तलिपुलिभ्यां च ॥ २—५४ ॥**

तलिनं त्वच्छेऽल्पे विरले त्रिषु ।

तटे पुलिनं

**गर्वेरत उच्च ॥ २—५५ ॥**

गर्भिण्यां गुर्विणी, गुर्विणो गुरौ ॥ २६३ ॥

**रुहेश्च ॥ २—५६ ॥**

रोहिणश्चन्दनतरौ रोहिणी गवि भे तथा ।

**महेरिनण् च ॥ २—५७ ॥**

माहिनं महिनं राज्ये पूजनीयेऽपि माहिनः ॥ २६४ ॥

**क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च ॥ २—५८ ॥**

वाग्वाचि स्यात्,[2] पृच्छके प्राट्, श्री तु स्यात्सरलद्रुमे ।

लक्ष्मीसरस्वतीधीत्रिवर्गसम्पद्विभूतिशोभासु ॥ २६५ ॥

---

1. ग्राम T.

2. वाग्वाचिकः T.

उपकरणवेषरचनाविधासु च श्रीरपि प्रथिता ।
यज्ञोपकरणे स्रूः, द्रूः स्वर्जेऽथो कामरूपिणि ॥ २६६ ॥
कीटे कटप्रूः, जूरश्वे वृषभे जवनेऽम्बरे ।
पिशाच्यां वाचि

**आप्नोतेर्ह्रस्वश्च ॥ २—५९ ॥**

के त्वापः, उदधिस्त्वर्धवारिणि ॥ २६७ ॥
ऋङ्मन्त्रभेदे, द्वार्द्वारे,[1] वर्षर्तौ प्रावृडुच्यते ।

**परौ व्रजेः षश्च पदान्ते ॥ २—६० ॥**

कर्मन्दिनि परिव्राट् स्यात्

**हुवः श्लुवच्च ॥ २—६१ ॥**

स्रुग्विशेषे[2] जुहूर्भवेत् ॥ २६८ ॥

**स्रुवोः कः ॥ २—६२ ॥**

स्रुवो द्रवावदानेऽथोत्तानपत्तनये ध्रुवः ।

**चिक् च ॥ २—६३ ॥**

स्रुग्यज्ञपात्रभेदे,

**तनोतेरनश्च वः ॥ २—६४ ॥**

त्वक् चर्मणि

**ग्लानुदिभ्यां डौः ॥ २—६५ ॥**

ग्लौर्हिमद्युतौ ॥ २६९ ॥
नौः स्यात्तर्यां

**च्विरव्ययम् ॥ २—६६ ॥**

ग्लौकरोति

---

1. द्वारि T.  2. ऋग्विशेषे A.

**रातेर्डैः ॥ २—६७ ॥**

रा: स्मृत: स्वर्णवित्तयो: ।

**गमेर्डोः ॥ २—६८ ॥**

गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयो:[1] ॥ २७० ॥

स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ।
नृस्त्रियो: स्वर्गवज्राम्बुराशिदृग्बाणलोमसु ॥ २७१ ॥

द्यौ: स्त्री स्वर्गेऽन्तरिक्षे

**भ्रमेश्च डूः ॥ २—६९ ॥**

भ्रू रोमाली नयनोपरि ।

अग्रेगू: सेवके

**दमेर्डोसिः ॥ २—७० ॥**

बाहौ दोर्

**पणेरिज्यादेश्च वः ॥ २—७१ ॥**

अथो नैगमे वणिक् ॥ २७२ ॥

**वशः कित् ॥ २—७२ ॥**

उशिर्घृताग्न्यो:

**भृज उच्च[1] ॥ २—७३ ॥**

भूमौ तु भुरिक्

**जसिसहोरुरिन् ॥ २—७४ ॥**

स्याज्जसुरि: पवौ ।

श्रान्ते क्षुधिते, सहुरि: सहिष्णूष्णांशुभूमिषु ॥ २७३ ॥

---

1. क्रतुभेदयो: T.
2. ऊच्च Sid. But भुरिज् is the word used in the Vedas.

**सुयुरुवृञो युच् ॥ २—७५ ॥**

सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च ।
चन्द्रे ना, यवनो म्लेच्छे, रवणः शब्दने खरे ॥ २७४ ॥

कोकिले चाथ वरणः प्राकारे तिक्तशाकके ।
वृतौ तु वरणं

**अशे रश च ॥ २—७६ ॥**

काञ्च्यां जिह्वायां रशना भवेत् ॥ २७५ ॥

**उन्देर्नलोपश्च ॥ २—७७ ॥**

ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियाम् ।

**गमेर्गश्च ॥ २—७८ ॥**

आकाशे गगनं च

**बहुलमन्यत्रापि ॥ २—७९ ॥**

अथो रसनं स्वदने ध्वनौ ॥ २७६ ॥

जिह्वायां तु नपुंसि स्यात् रास्नाकाञ्च्योः स्त्रियां च सा ।
स्यन्दनं तु स्रुतौ नीरे तिनिशे ना रथेऽस्त्रियाम् ॥ २७७ ॥

रोचना रक्तकल्हारे गोपित्तवरयोषितोः ।
रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु ॥ २७८ ॥

चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम् ।
चन्दनः कपिभेदे स्यात् , नदीभेदे तु चन्दनी ॥ २७९ ॥

असनं क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे ।
राजातनः क्षीरिकायां पियाले किंशुकेऽपि च ॥ २८० ॥

नयनं लोचने, दीपे द्योतनः, श्रवणस्तु भे ।

**रञ्जेः क्युन् ॥ २—८० ॥**

कुसुम्भे रजनं रात्रौ हरिद्रायां रजन्यपि ॥ २८१ ॥

अदातरि स्यात् कृपणो

**भूसूधूभ्रस्जिभ्यः छन्दसि ॥ २—८१ ॥**

भुवनं विष्टपे जने ।
व्योम्न्यप्सु, सुवनः सूर्ये, धुवनो जातवेदसि ॥ २८२ ॥
सुरते स्यान्निधुवनमम्बरीषे तु भृज्जनम् ।

**कृपृवृजिमन्दिनिधाञः क्युः ॥ २—८२ ॥**

किरणः पुरणो रश्मौ सरस्वति भवेत् क्रमात् ॥ २८३ ॥
अन्तरिक्षे तु वृजनं, मन्दनं स्तोत्र उच्यते ।
निष्ठामृत्योः कुले नाशे निधनं, द्रविणे धनम् ॥ २८४ ॥

**धृषेर्धिष च संज्ञायाम् ॥ २—८३ ॥**

धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति ।

**( हन्तेर्घुरश्च[1] । )**

**वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥ २—८४ ॥**

पृषंश्चित्रमृगे पुंसि बिन्दौ भूम्नि नपुंसके ॥ २८५ ॥
श्वेतबिन्दुयुते चित्रे त्रिष्वथो विपुले बृहत् ।
बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च ॥ २८६ ॥
वारिधान्यां महत्यां च छन्दोवसनभेदयोः[2] ।
महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् ॥ २८७ ॥
तत्वभेदे महान् श्रेष्ठेऽन्यवद्वायौ जगन्नपि ।
जगत्स्याद्विष्टपे क्लीबं जङ्गमे त्रिषु तद्भवेत् ॥ २८८ ॥

---

1. This *sūtra* found in Ujj. is omitted in Sid. also. Mahādeva does not consider this as genuine.

2. After this both B. and T. add:—
विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती ।
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ॥ इति वैजयन्ती।

जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च ।

**संश्चत्तृपद्वेहत् ॥ २—८५ ॥**

संश्चत्तु कुहकेऽथो स्यात् छल्ले ग्लौतृप्यतोस्तृपत् ॥ २८९ ॥

वेहद्गर्भोपघातिन्यां[1]

**छन्दस्यसानच् शुजृभ्याम् ॥ २—८६ ॥**

शवसानोऽध्वगन्तृणोः ।

पुरुषे जरसानोऽथ दरसानो विदारके ॥ २९० ॥

नौकायां तरसानः स्यात्, वरसानो वरीतरि ।

**ऋञ्जिवृधिमन्दिसहिभ्यः कित् ॥ २—८७ ॥**

ऋञ्जसानो भर्जकेऽब्दे,[2] पुरुषे वृधसानवाक् ॥ २९१ ॥

अग्निजीवस्तोतृषु स्यान्मन्दसानोऽथ केकिनि ।

यज्ञे सहनशीले च सहसानो

**अर्तेर्गुणः शुट् च ॥ २—८८ ॥**

अर्शसानवाक् ॥ २९२ ॥

शत्रूणां हिंसकेऽग्नौ चाथार्णसानो हुताशने ।

**सम्यानच् स्तुवः ॥ २—८९ ॥**

वाग्मिनि स्यात् संस्तवानो जानादेव सदस्यपि ॥ २९३ ॥

**युधिबुधिदृशिभ्यः किच्च ॥ २—९० ॥**

रिपौ युधान आचार्यबोधयोस्तु बुधानवाक् ।

कृषाणः कर्षके कर्मकरे चाथो दृशानवाक् ॥ २९४ ॥

लोकपाल उपाध्याये विप्रे

**मुचियुधिभ्यां सन्वच्च ॥ २—९१ ॥**

---

1. B. and T. add after this:—"अथाम्नायभवं द्वयं अग्रिमं शब्दरूपं स्यात् ।"

2. भर्जकेऽभ्रे B. & T.

अथ त्यागिमेघयोः ।

मुमुचानो, योद्धरि तु युयुधानः

**दुर्छेस्सनो लुक् छलोपश्च ॥ २—९२ ॥**

कलानिधौ ॥ २९५ ॥

कुटिले जुहुराणः

**श्वितेर्दश्च ॥ २—९३ ॥**

शिश्विदानः कृष्णकर्मणि[1] ।

अकृष्णकर्मण्यपि स

**तन् तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥ २—९४ ॥**

संस्ता स्तोतर्यथो जिने ॥ २९६ ॥

- शास्तान्यवच्छासके स्यात्, प्रशास्ता तु प्रशासके ।
क्षत्ता वैश्याक्षत्रियाजे शूद्राद्[2] द्वास्थे च सारथौ ॥ २९७ ॥

भुजिष्यातनयेऽपि स्यान्नियुक्ते द्रुहिणे पुमान् ।
प्रस्तोतर्त्विग्विशेषेऽपि, हर्ता चोरे हरेऽपि च ॥ २९८ ॥

**बहुलमन्यत्रापि ॥ २—९५ ॥**

मन्ता विदुषि, हन्ता तु चोरे, धाता प्रजापतौ ।

**नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ ॥ २—९६ ॥**

पौत्रदौहित्रयोर्नप्ता, नेष्टा स्यादृत्विगन्तरे ॥ २९९ ॥

त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि ।
होता पोता याजकयोर्भ्राता तु स्यात्सहोदरे ॥ ३०० ॥

कन्याभर्तरि जामाता, माताम्बायां, पिता पुनः ।
ताते, कन्यायां दुहिता[3]

---

1. कृष्णवर्त्मनि T. 2. वैश्यात् क्षत्रियाजे शूद्राद्वा T.
2. दुहिता कन्यायां B. & T.

**सुञ्यसेः ऋन् ॥ २—९७ ॥**

भगिन्यां तु स्वसा भवेत् ॥ ३०१ ॥

**यतेर्वृद्धिश्च ॥ २—९८ ॥**

याता देवरभार्यायां

**नञि च नन्देः ॥ २—९९ ॥**

भगिन्यां स्वामिनः पुनः ।

ननन्दा च ननान्दा

**दिवेः ऋः ॥ २—१०० ॥**

अथो देवा पतिसहोदरे ॥ ३०२ ॥

**नयतेर्डिच्च ॥ २—१०१ ॥**

पुरुषे ना

**सव्ये स्थश्छन्दसि ॥ २—१०२ ॥**

अथ सव्येष्ठा सारथौ छान्दसः स च ।

**अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ॥ २—१०३ ॥**

अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थदारुणि ॥ ३०३ ॥

सरणिर्मार्गपङ्क्त्योः स्त्री, शरणिर्हिंसनेऽपि च ।
वसुन्धरायां धरणिर्धरणी, धमनी तथा ॥ ३०४ ॥

सिराहट्टविलासिन्योः, गतावमनिवाग्भवेत्[1] ।
स्त्रीपुंसयोः स्यादशनिश्चञ्चलायां पवावपि ॥ ३०५ ॥

अवनिः कौ, ना तरणिर्ब्रध्न स्त्री नौहरिद्रयोः ।
रजनी नीलिनीरात्रिकुमारीजतुकासु च ॥ ३०६ ॥

रजनी रजनी रात्र्यां, दरणिः स्याद्विदारके ।

---

1. The portion 305 b — 309a is missing in B and T.

**आङि शुषेः सनश्छन्दसि ॥ २—१०४ ॥**

आशुशुक्षणिरग्नौ स्याद्वाते

**कृषेरादेश्च चः[1] ॥ २—१०५ ॥**

अथो चर्षणिर्जने ॥ ३०७ ॥

चर्षणिर्वृषबन्धक्योः

**अदेर्मुट् च ॥ २—१०६ ॥**

अद्मनिर्हयशुष्मणोः ।

**वृतेश्च ॥ २—१०७ ॥**

वर्तनिर्वर्त्मनिर्मार्गे

**क्षिपेः किच्च ॥ २—१०८ ॥**

क्षिपणिः क्षेप आयुधे ॥ ३०८ ॥

**अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः ॥ २—१०९ ॥**

ज्वालायामर्चिः, शोचिस्तु दीप्तौ, होम्ये हविर्भवेत् ।
सर्पिर्घृतेऽथ पटले छदिः, छर्दिस्तु रुग्भिदि ॥ ३०९ ॥

**बृंहेर्नलोपश्च ॥ २—११० ॥**

बर्हिर्न स्त्री कुशे नाग्नौ

**द्युतेरिसिन्नादेश्च जः ॥ २—१११ ॥**

ज्योतिरग्नौ दिवाकरे ।
पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः ॥ ३१० ॥

**वसौ रुचेः संज्ञायाम् ॥ २—११२ ॥**

वसुरोचिर्यज्ञभेदे, रोचिर्ज्वाले

**भुवः कित् ॥ २—११३ ॥**

अर्णवे भुविः ।

---

1. चः Ujj.

॥ २—११४ ॥

सधिस्त्वनडुहि प्रोक्तो, यज्ञे स्तोतरि च स्तुविः ॥ ३११ ॥

**पिबतेस्थुक् च ॥ २—११५ ॥**

चक्षुस्समुद्रयोः पाथिः

**जनेरुसिः ॥ २—११६ ॥**

जनुर्जन्यां, मुनौ मनुः ।

**मनेर्धश्छन्दसि ॥ २—११७ ॥**

मधुः पवित्रे

**अर्तिपॄवपियजितनिधनितपिभ्यो नित् ॥ २—११८ ॥**

इर्मेऽरुः, परुर्ग्रन्थौ, वपुस्तनौ ॥ ३१२ ॥

शस्ताकृतौ चाथ यजुर्मन्त्रभेदे, तनौ तनुः ।
धनुः प्रियाले ना न स्त्री राशिभेदे शरासने ॥ ३१३ ॥

धनुर्धरे वाच्यवत्स्यात् तपुः सूर्याग्निशत्रुषु ।

**एतेर्णिच्च ॥ २—११९ ॥**

आयुर्जीवितकाले

**चक्षेः शिच्च ॥ २—१२० ॥**

अक्ष्णि चक्षुः

**मुहेः किच्च ॥ २—१२१ ॥**

अप्यसकृन्मुहुः ॥ ३१४॥

**बहुलमन्यत्रापि ॥ २—१२२ ॥**

आचक्षुः परिचक्षुश्च विचक्षणस्त्रयो बुधे ।

**कॄगॄशॄवृञ्चतिभ्यः ष्वरच् ॥ २—१२३ ॥**

कर्वरो यातुनि व्याघ्रे चाहङ्कारे तु गर्वरः ॥ ३१५ ॥

शर्वरी स्त्रीरजन्योः स्याद्वर्वरो नीवृदन्तरे ।
पामरे केशविन्यासे फञ्जिकायां तु वै द्वयोः ॥ ३१६ ॥

शाकपुष्पभिदोः स्त्री स्यात्, चत्वरः स्थण्डिलेऽङ्गणे ।

**नौ सदेः ॥ २—१२४ ॥**

निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी ॥ ३१७ ॥

इत्युणादिकोशे

द्वितीयपादीयनामसंग्रहः ॥

---

श्रीः

## ॥ अथ तृतीयः पादः ॥

**छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः- ॥ ३—१ ॥**

छित्वरश्छेदनद्रव्ये[1] धूर्ते वैरिणि च त्रिषु ।
छत्वरः कुञ्जगृहयोः, कैवर्ते धीवरो भवेत् ॥ ३१८ ॥

पीवरः कच्छपे स्थूले, मीवरो व्याघ्रहिंस्रयोः ।
चीवरं भिक्षुवस्त्रे स्यात्, तीवरो लुब्धकेऽम्बुधौ ॥ ३१९ ।

स्यान्नीवरो वाणिजके भिक्षुवास्तव्ययोरपि[2] ।
गह्वरं तु गुहादम्भनिकुञ्जगहनेष्वपि ॥ ३२० ॥

कट्वरं व्यञ्जने तक्रे न द्वयोः कुत्सितेऽन्यवत् ।
संयद्वरो वाग्यते च नृपे, सम्पद्वरो नृपे ॥ ३२१ ॥

---

1. छेदने द्रव्ये A.
2. वास्तवयोरपि A. B. & T.

उपह्वरं समीपे स्यादेकान्तेऽपि रथे तु ना ।

**इण्सिञ्जिदीङुष्यविभ्यो नक् ॥ ३—२ ॥**

इनः सूर्ये नृपे पत्यौ, सिनः काणे, जिनोऽर्हति ॥ ३२२ ॥

बुद्धेऽथ जित्वरे वाच्यतुल्यो, दीनाखुयोषिति ।
कातरे दुर्गते दीनः, उष्णो ग्रीष्मे पुमान् भवेत् ॥ ३२३ ॥

दक्षेऽशीते त्रिषु , ऊनस्तु[1] हीने

**फेनमीनौ ॥ ३—३ ॥**

फेनस्तु डिण्डिरे ।

मीनो राश्यन्तरे मत्स्ये

**कृषेर्वर्णे ॥ ३—४ ॥**

कृष्णः काकेऽर्जुने हरौ ॥ ३२४ ॥

व्यासेऽथ द्रौपदीनीलीकणाद्राक्षासु योषिति ।
मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोः ॥ ३२५ ॥

**बन्धेर्ब्रधिबुधी च ॥ ३—५ ॥**

ब्रध्नः सूर्ये च मूले च, बुध्नो ना मूलरुद्रयोः ।

**धापृवस्यज्यतिभ्यो नः ॥ ३— ६ ॥**

धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि ॥ ३२६ ॥

पर्णं पत्रे किंशुके ना, वस्नं वेतनवस्त्रयोः ।
अवक्रये पुमान् , वेनो वायुलुण्टाकधातृषु ॥ ३२७ ॥

नृपभेदे मनोः पुत्रेऽथात्न आदित्यवातयोः ।
घृणा कृपायां, श्रोणस्तु पङ्गौ, स्योनोऽर्यमोस्रयोः ॥ ३२८ ॥

**लक्षेरट् च ॥ ३—७ ॥**

---

1. दक्षे शीले पुमानूनो T.

लक्ष्णं नाम्नि चिह्ने च सौमित्रौ नाथ योषितोः ।
हंससारसयोः स्त्री स्यात्, लक्ष्मणं नामचिह्नयोः ॥ ३२९ ॥
सौमित्रौ नाथ भार्यायां सारसस्यौषधीभिदि ।
स्त्रियां त्रिषु स्यात्सश्रीके

**वनेरिच्चोपधायाः ॥ ३—८ ॥**

वेन्ना विन्नापगाभिदि ॥ ३३० ॥

**सिवेष्टेर्यू च ॥ ३—९ ॥**

स्यूनः स्याच्चण्डकिरणे

**कवृजॄसिद्रुपन्यनिस्वपिभ्यो नित् ॥ ३—१० ॥**

कर्णः कुन्तीसुते श्रुतौ ।
सुवर्णालौ, अथो भेदेऽक्षरे रूपे विलेपने ॥ ३३१ ॥
वर्णोऽस्त्री ना तु शुक्लादौ द्विजादौ यशसि स्तुतौ ।
कथायां च गुणे चापि, जर्णो जीर्णद्रुमेन्दुषु ॥ ३३२ ॥
सेना चम्वाभथो द्रोणः कृष्णकाके कृपीपतौ ।
आढके तच्चतुष्के च[1] न स्त्री, स्त्री नीवृदन्तरे ॥ ३३३ ॥
तथा काष्ठाम्बुवाहिन्यां गवां घासभुजि स्थितौ ।
पन्नो नीचैर्गतौ सर्पेऽथान्नं स्याद्भक्तभुक्तयोः ॥ ३३४ ॥
स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान् ।

**धेट इच्च ॥ ३—११ ॥**

धेनः समुद्रनदयोः स्त्री तु वाचि नदीभिदि ॥ ३३५ ॥
धीनः समुद्रे

**तृषिशुषिरसिभ्यः कित् ॥ ३—१२ ॥**

तृष्णा तु पिपासालिप्सयोर्भवेत् ।

---

1. आढके च चतुष्के च T.

शुष्णः सूर्ये हुताशे च, रस्नं स्याद्रस्यवस्तुनि ॥ ३३६ ॥

**सुञो दीर्घश्च ॥ ३—१३ ॥**

सूनं स्यात् प्रसवे पुष्पे रगोद्योगे पुमान् घृणौ ।
सूना पुत्र्यां वधस्थानगलशुण्डिकयोर्भवेत् ॥ ३३७ ॥

**रमेस्त च ॥ ३—१४ ॥**

रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम् ।

**रास्नासास्नास्थूणावीणाः ॥ ३—१५ ॥**

रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम् ॥ ३३८ ।

गोकण्ठकम्बले सास्ना, स्थूणा स्तम्भे गृहस्य च ।
प्रतिमायां च वीणा तु वल्लक्यामपि विद्युति ॥ ३३९ ॥

**गादाभ्यामिष्णुच् ॥ ३—१६ ॥**

गेष्णुर्नटे गायने च, देष्णुर्दातरि दुर्दमे ।

**कृत्यशूभ्यां क्स्नः ॥ ३—१७ ॥**

कुक्षौ सर्वाम्बुनोः कृत्स्नं, अखण्डे त्वक्ष्णमिष्यते ॥ ३४० ॥

**तिजेर्दीर्घश्च ॥ ३—१८ ॥**

तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके ।
क्लीबं यवाग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिषु ॥ ३४१ ॥

**श्लिषेरच्चोपधायाः ॥ ३—१९ ॥**

श्लक्ष्णं तु मसृणे

**यजिमनिशुन्धिदसिजनिभ्यो युच् ॥ ३—२० ॥**

यज्युरध्वर्यौ, स्यात् क्रतौ क्रुधि ।
दैन्ये मन्युः, शुन्ध्युरग्नौ, दस्युस्तस्करवैरिणोः ॥ ३४२ ॥

जन्युः प्राण्यग्निविधिषु भवेत्

**भुजिमृङ्भ्यां युक्त्युकौ ॥ ३—२१ ॥**

भुज्युस्तु भाजने[1] ।

दैवे यमे मृतौ मृत्युः

**सृतेरयुः[2] ॥ ३—२२ ॥**

सरयुः सरयूर्नदी ॥ ३४३ ॥

**पानीविषिभ्यः पः ॥ ३—२३ ॥**

पापं त्वधर्मे तद्युक्ते त्रिषु, नेपः पुरोहिते ।
नीपः कदम्बबन्धूकनीलाशोकेषु धन्विनि ॥ ३४४ ॥

वेप्पो जले

**च्युवः किच्च[3] ॥ ३—२४ ॥**

च्युपो वक्त्रे, चुप्पः स्यान्मन्दगन्तरि ।

**स्तुवो दीर्घश्च ॥ ३—२५ ॥**

स्तूपः समूहे चैतन्ये

**सुशृभ्यां निच्च ॥ ३—२६ ॥**

सूपो व्यञ्जनसूदयोः ॥ ३४५ ॥

प्रस्फोटने सूर्पशूर्पे

**कुयुभ्यां च ॥ ३—२७ ॥**

कूपोऽन्धुगुणवृक्षयोः ।
मृन्माने कूपके गर्ते, यूपस्तु पशुबन्धने ॥ ३४६ ॥

**खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ॥ ३—२८ ॥**

खष्पः क्रोधे बलात्कारे, शिल्पं कौशल इष्यते ।
शष्पं बालतृणे ना तु प्रतिभायाः क्षयेऽपि सः ॥ ३४७ ॥

---

1. भावने T.
2. सर्तेरयूः । Reading noted by Perusūri
3. चुपेः कित् । Daśapādi (7—3)

बाष्पं तूष्माश्रुणोरस्त्री, रूपमाकारपद्ययोः ।
ग्रन्थावृत्तौ नाटकादौ सुन्दरत्वस्वभावयोः ॥ ३४८ ॥

ना शब्दपशुकेशेषु, पर्पं बाणतृणे गृहे[1] ।
तल्पं शय्याट्टदारेषु, पम्पा स्यात् सरसीभिदि ॥ ३४९ ॥

चम्पा तु नगरीभेदे

**स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ॥ ३—२९ ॥**

स्तनयित्नुर्वलाहके ।
तद्ध्वनौ रोगमृगयोः, हर्षयित्नुस्तु काञ्चने ॥ ३५० ॥

सुतेऽथ पोषयित्नुः स्यात् परपुष्टे द्विजेऽपि च ।
गदयित्नुः पुमान् कामे जल्पाके कामुकेऽपि च ॥ ३५१ ॥

मदयित्नुः पुमान् कामदेवे मद्ये नपुंसकम् ।

**कृहनिभ्यां क्त्नुः ॥ ३—३० ॥**

कृत्नुः शिल्पिनि, हत्नुस्तु व्याधौ शस्त्रे च हन्तरि ॥ ३५२ ॥

**गमे सन्वच्च ॥ ३—३१ ॥**

जिगत्नुर्गन्तरि, कृणुः कर्तर्यथ हनुः स्मृतः ।
वक्त्रावयवभेदेऽथ जिगनुरपि गन्तरि ॥ ३५३ ॥

**दाभाभ्यां नुः ॥ ३—३२ ॥**

दानुर्दातरि विक्रान्ते, भानुः किरणसूर्ययोः ।

**वचेर्गश्च ॥ ३—३३ ॥**

वग्नुर्वक्तरि

**धेट इच्च ॥ ३—३४ ॥**

धेनुस्तु नवसूतौ गवि स्मृता[2] ॥ ३५४ ॥

---

1. पुंगुपीठे भवेत् पर्पं तथा बालतृणे गृहे। T.
2. The order of the two halves of the verse is reversed in T.

**सुवः कित् ॥ ३—३५ ॥**

सूनुः पुत्रेऽनुजे सूर्ये

**जहातेर्द्वेऽन्तलोपश्च ॥ ३—३६ ॥**

जह्नुर्ऋष्यन्तरे हरौ ।

**स्थो णुः ॥ ३—३७ ॥**

स्थाणुः कीले स्थिरे शम्भौ ध्रुवे त्वस्त्री

**अजिवृरीभ्यो निच्च ॥ ३—३८ ॥**

नृपान्तरे ॥ ३५५ ॥

वंशे च वेणुर्वर्णुस्तु स्याद्देशनदभेदयोः ।
रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः ॥ ३५६ ॥

**विषेः किच्च ॥ ३—३९ ॥**

विष्णुर्हरौ

**कृदाधारार्चिकलिभ्यः कः ॥ ३—४० ॥**

अथो कर्कः शुक्लाश्वे दर्पणे घटे ।
वह्नौ कर्कटके चाथ दाको दातर्यथोक्षिणि ॥ ३५७ ॥
आधारेऽपि च धाकः स्यादथ राका नदीभिदि[1] ।
कच्छूनवरजःकन्यापूर्णेन्दुतिथिषु स्त्रियाम् ॥ ३५८ ॥
अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ ।
कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके ॥ ३५९ ॥
विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनः ।
लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च ॥ ३६० ॥
फल्को विशोधिताङ्गे स्याद् रङ्कः कृपणमन्दयोः ।

---

1. वह्नौ कर्कटके, दाको भवेद्दातरि, धाकवाक् ।
आधारे वृषभे च स्यादथ राका नदीभिदि ॥ B.
T. omits portion 'दातर्यथोक्षिणि....स्यादथ'

**सृवृभूशुषिमुषिभ्यः कक् ॥ ३—४१ ॥**

सृकः सरणशीले स्याद्वाते बाणे तथोत्पले ॥ ३६१ ॥

वृकः काके श्वापदे च, भूकं विवरकालयोः ।
शुष्कं तु नीरसे, मुष्कः सङ्घेऽण्डे मोक्षके तथा ॥ ३६२ ॥

राशिस्थाने भवेदोको, मूको वाग्रहिते पुनः ।

**शुकवल्कोल्काः ॥ ३—४२ ॥**

शुको व्याससुते कीरे रावणस्य च मन्त्रिणि ॥ ३६३ ॥

शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् ।
वल्कं तु वल्कलेऽथोल्का ज्वालायां स्याद्विभावसोः ॥ ३६४

**इण् भीकापाशल्यतिमर्चिभ्यः कन् ॥ ३—४३ ॥**

एकः सङ्ख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु ।
सङ्ख्यायां त्वेकवचनी, भेको मण्डूकमेघयोः[1] ॥ ३६५ ॥

काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि ।
शिरोवक्षालने मानप्रभेदद्वीपभेदयोः ॥ ३६६ ॥

काका स्यात्काकनासायां काकोलीकाकजङ्घयोः ।
रक्तिकायां मलय्वां च काकमाच्यां च योषिति ॥ ३६७ ॥

काकं सुरतबन्धे स्यात् काकानामपि संहतौ ।
पाकः शिशौ परिणतौ स्थाल्यादौ पचनेऽपि च ॥ ३६८ ॥

केशस्य जरसा शौक्ल्ये, शल्कं शकलवल्कयोः ।
भवेदप्रियवाचायामपि काष्ठत्वचि स्मृतम् ॥ ३६९ ॥

अल्कः शरीरावयवे पथिकासन्नयोरपि ।
मर्कः शरीरे वायौ च, शाको द्वीपान्तरेऽपि च ॥ ३७० ॥

---

1. मेषयोः A & T. But see Hemacandra: भेको मेघमण्डूक-भीरुषु । and the commetary thereon मेघे - भेकाऽछेका केकिकेकाक्रियासु ।

शक्तौ द्रुमविशेषे च पुमान् हरितके स्त्रियाम् ।
साकं सहार्थेऽव्ययं स्यात्

**नौ हः ॥ ३—४४ ॥**

निहाका गोधिका भवेत् ॥ ३७१ ॥

**नौ सदेर्डिश्च ॥ ३—४५ ॥**

निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः ।
वक्षोलङ्करणे हेममात्रे हेमपलेऽपि च ॥ ३७२ ॥

**स्यमेरीट् च[1] ॥ ३—४६ ॥**

स्यमीकः स्यमिको नाकौ वृक्षे स्त्री नीलिकार्थकः ।

**अजियुधूनीभ्यो दीर्घश्च ॥ ३—४७ ॥**

वीकः स्वरे पक्षिवाय्वोः, स्यायूका जन्तुगिर्यपि ॥ ३७३ ॥

धूको वायौ च धूर्ते च, स्यान्नीको वृक्षभिद्यपि ।

**ह्रियो रश्च लो वा ॥ ३—४८ ॥**

ह्रीका ह्लीका च लज्जायां

**शकेरुनोन्तोन्त्युनयः ॥ ३—४९ ॥**

शकुनः पक्षितद्भिदोः ॥ ३७४ ॥

शुभशंसिनिमित्ते तु शकुनं स्यान्नपुंसकम् ।
शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः ॥ ३७५ ॥

शकुन्तिर्वी, शकुनिर्वी सौबले करणान्तरे ।
कुन्ती पाण्डुप्रियायां च सलक्यां गुग्गुलुद्रुमे ॥ ३७६ ॥

**भुवो झिच् ॥ ३—५० ॥**

भवन्तिः स्याद्वर्तमानकाले, लटि भवन्त्यपि ।
अवन्त्यवन्त्यौ पूर्भेदे, किंवदन्ती जनश्रुतौ ॥ ३७७ ॥

---

1. स्यमेरिट् च is another reading. See Perusūri.

**कन्युच् क्षिपेश्च ॥ ३—५१ ॥**

क्षिपण्युरायुधे काले वायौ देहवसन्तयोः ।
भुवन्युरीश्वरे भानौ ज्वलने शशलाञ्छने ॥ ३७८ ॥

**अनुङ् नदेश्च ॥ ३—५२ ॥**

नदनुर्जलदे वायौ क्षिपणुः

**कृवृदारिभ्य उनन् ॥ ३—५३ ॥**

करुणो रसे ।
तरावथ कृपायां स्त्री, वरुणः सूर्यपाशिनोः ॥ ३७९ ॥
तरुप्रभेदे सलिले स्याद्,अथो दारुणं भये ।
भयानकरसे पुंसि त्रिषु तु स्याद्भयङ्करे ॥ ३८० ॥

**तो रश्च लो वा ॥ ३—५४ ॥**

तरुणः[1]कुब्जपुष्पे ना रुचके यूनि तु त्रिषु ।
तलुनस्त्रिषु यूनि स्यात्

**क्षुधिपिशिमिथिभ्य कित् ॥ ३—५५ ॥**

क्षुधुनो म्लेच्छभिद्यपि ॥ ३८१
पिशुनं वानरमुखे कुङ्कुमे वायसे तु ना ।
वाच्यवत् सूचके क्रूरे पृक्कायां तु स्त्रियां भवेत् ॥ ३८२
मिथुनं न द्वयो राशिभेदे स्त्रीपुंसयुग्मके ।

**फलेर्गुक् च ॥ ३—५६ ॥**

फल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहोः ॥ ३८३ ॥
फल्गुनी स्याद्दक्षभेदे, फाल्गुनोऽप्यर्जुने भवेत् ।
तपस्यसंज्ञमासे तत्पूर्णिमायां तु फाल्गुनी ॥ ३८४ ॥

**अशेर्लशश्च ॥ ३—५७ ॥**

---

1. तरुणं T.

लशुनं स्यान्महाकन्दे

**अर्जेणिलुक् च ॥ ३—५८ ॥**

**तृणाख्यायां चित् ॥ ३—५९ ॥**

अर्जुनः ककुभपार्थयोः ।
मातुरेकसुते स्कन्दे मयूरे धवले पुनः ॥ ३८५ ॥

त्रिषु क्लीबे नेत्ररोगतृणयोरर्जुनी गवि ।
उषायां बाहुदानद्यां कुट्टन्यामपि च क्वचित् ॥ ३८६ ॥

**अर्तेश्च ॥ ३—६० ॥**

अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ ।
निश्शब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु ॥ ३८७ ॥

अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च ।

**अजियमिशीङ्भ्यश्च ॥ ३—६१ ॥**

वयुनं स्याद्देवगृहेऽपि प्रज्ञानप्रशस्ययोः ॥ ३८८ ॥

यमुना तु नदीभेदे, शयुनोऽजगरे मतः ।

**वृतॄवदिहनिकमिकषिभ्यः सः ॥ ३—६२ ॥**

वर्षोऽस्त्री भारतादौ स्याज्जम्बूद्वीपाब्दवृष्टिषु ॥ ३८९ ॥

प्रावृषि स्त्री भूम्नि, वर्सोऽप्येवं, तर्षः प्लवे भवेत् ।
उदन्यालिप्सयोर्वत्सः पुत्रादौ तर्णकाब्दयोः ॥ ३९० ॥

क्लीबे तु वक्षसि भवेत्, हंसः स्यान्मानसौकसि ।
निर्लोभ[1]नृपविष्ण्वर्कपरमात्मसु मत्सरे ॥ ३९१ ॥

योगभेदे मन्त्रभेदे शारीरमरुदन्तरे ।
तुरङ्गमप्रभेदे च, कंसो दैत्ये स्त्रियां तु सः ॥ ३९२ ॥

---

1. निर्लोभे नृप. A.

कांस्ये च कांस्यपात्रे च तैजसे मानभिद्यपि ।
कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे ॥ ३९३ ॥

स्पर्धायां ना तु दोर्मूलकच्छवीरुत्तृणेषु च ।
लाक्षा वृक्षस्य निर्यासे, योषा जोषा स्त्रियां स्त्रियाम् ॥ ३९४ ॥

**प्लुषेरच्चोपधायाः ॥ ३—६३ ॥**

प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः ।
पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तितः ॥ ३९५ ॥

**मनेर्दीर्घश्च ॥ ३—६४ ॥**

मांसं स्यादामिषे मांसी कक्कोलीजटयोर्मता[1] ।

**अशेर्देवने ॥ ३—६५ ॥**

अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके ।
रुद्राक्षेन्द्राक्षयोः सर्पे विभीतकतरावपि ॥ ३९६ ॥

चक्रे कर्षेऽक्षं तु तुत्थे स्यात्सौवर्चल इन्द्रिये ।

**स्नुव्रश्चिकृत्यृषिभ्यः कित् ॥ ३—६६ ॥**

स्नुषा पुत्रस्य भार्यायां, तरौ वृक्षोऽथ वारिणि ॥ ३९७ ॥

पापे च कृत्सं सर्पे ना,

**ऋषेर्जातौ ॥ ३—६७ ॥**

स्यादृक्षः पर्वतान्तरे ।
भल्लूके शोणके वाच्यवत्तु स्यात् कृतवेधने ॥ ३९८ ॥

नपुंसकस्तु नक्षत्रे

**उन्दिगुधिकुषिभ्यश्च ॥ ३—६८ ॥**

उत्सः प्रस्रवणे मतः ।
गुत्सः स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः ॥ ३९९ ॥

1. This line is omitted in A. जटयोः स्त्रियाम् T.

कुक्षः कुक्षौ

**गृधिपण्योर्दकौ च ॥ ३—६९ ॥**

स्मरे गृत्सः, पक्षो मासार्धपार्श्वयोः ।
ग्रहे साध्ये विरोधे च बले सखिसहाययोः ॥ ४०० ॥

चुल्लीरन्ध्रे पतत्रे च देहाङ्गे राजकुञ्जरे ।

**अशेः सरन् ॥ ३—७० ॥**

अक्षरं त्वस्त्रियां वर्णे मोक्षे ना परमात्मनि ॥ ४०१ ॥

**वसेश्च ॥ ३—७१ ॥**

**सपूर्वाच्चित्**[1] **॥ ३—७२ ॥**

संवत्सरो वत्सरोऽब्दे पञ्चके परिवत्सरः ।

**कृधूमदिभ्यः कित् ॥ ३—७३ ॥**

तिलौदने स्यात् कृसरो, धूसरं[2] त्रिषु पाण्डरे ।
खरे ना स्त्री तु किन्नर्यां, मत्सरः कृपणेऽन्यवत् ॥ ४०२ ॥

असह्यान्यसमृद्धौ च हर्षहेतौ च ना तु सः ।
मात्सर्यक्रोधयोः स्त्री तु मक्षिकायां

**पते रश्च लः ॥ ३—७४ ॥**

अथो पथि[3] ॥ ४०३ ॥

पत्सलः

**तन्यृषिभ्यां क्सरन् ॥ ३—७५ ॥**

---

1. संपूर्वाच्चित् is another reading. *Bālamanoramā* on *Sid.* supports the reading सपूर्वात्.

2. धूसरस्त्रिषु T. The portion 'धूसरं....किन्नर्यां' is omitted in A.

3. भुवि. T.

तसरः सूत्रवेष्टने सूत्रभिद्यपि ।
ऋक्षरं तोयधारायां ना तु स्यात् कण्टकर्त्विजोः ॥ ४०४

**पीयुक्कणिभ्यां कालन् ह्रस्वः सम्प्रसारणं च ॥ ३—७६ ॥**

राजादने पियालः स्यात्, कुणालो देशभिद्यपि ।
भगालं स्यान्नृशिरसि

**कठिकुषिभ्यां काकुः ॥ ३—७७ ॥**

कठाकुः स्याद्विहङ्गमे ॥ ४०५ ॥
कुषाकुरर्के कप्यग्न्योः कुषाकुः शस्त्र इष्यते ।
कुषाकुर्मूषिकायां स्यात्

**सर्तेर्दुक् च ॥ ३—७८ ॥**

सृदाकुर्नानिले मृगे ॥ ४०६ ॥
आपगायां च वज्रे[1] च ज्वलने प्रतिसूर्यके ।

**वृतेर्वृद्धिश्च ॥ ३—७९ ॥**

वार्ताकुरपि वृन्ताके वार्ताकी तत्र पुंसि न ॥ ४०७ ॥

**पर्देर्नित् सम्प्रसारणमल्लोपश्च ॥ ३—८० ॥**

पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमान् ।

**सृयुवचिभ्योऽन्युजागूजक्नुचः ॥ ३—८१ ॥**

सरण्युस्तु पुमान् मेघे वायौ स्यात् शीघ्रगामिनि ॥ ४०८
यवागूरुष्णिकायां स्याद्वचक्नुर्विप्रवाग्मिनोः ।
ऋषिभेदे

**आनकः शीङ्भियः ॥ ३—८२ ॥**

अथाजगरे भवेदपि शयानकः ॥ ४०९ ॥
भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे ।

---

1. चक्रे A. & B.

आणको लूधूशिङ्घिधाञ्भ्यः ॥ ३—८३ ॥

लवाणकं भवेद्दात्रे, पवमाने धवाणकः ॥ ४१० ॥
शिङ्घाणकः श्लेष्मणि स्यात्, शिङ्घाणं नासिकामले ।
काचपात्रे लोहमले ना तु फेने प्रकीर्तितः ॥ ४११ ॥
धाणको दीनारभागे

उल्मुकदर्विहोमिनः ॥ ३—८४ ॥

ज्वलदङ्गार उल्मुकम् ।
परिवेषणपात्रे स्याद्दर्विर्होमी तु होतरि ॥ ४१२ ॥

ह्रियः कुक् रश्च लो वा ॥ ३—८५ ॥

ह्रीकुः ह्लीकुः सत्रपे स्यात्

हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ॥ ३—८६ ॥

स्याद्धस्तः करशुण्डयोः ।
ऋक्षे केशात्परो व्राते सप्रकोष्ठे करेऽपि[1] च ॥ ४१३ ॥
मर्तो भूलोके, गर्तस्तु स्यात्त्रिगर्तान्तरेऽवटे ।
कुकुन्दरे चैतशब्दो भवेत् कर्बुर आगते ॥ ४१४ ॥
वातः समीरणेऽथान्तं स्वरूपेऽनशने तु ना ।
शेषे न स्त्र्यन्तिके वाच्यलिङ्गो, दन्तो भवेद्रदे ॥ ४१५ ॥
कुञ्जेऽद्रिकटके, लोतो मेषे स्याच्चोरिताश्रुणोः ।
पोतः शिशौ वहित्रे च, स्याद्धूर्तस्तु शठे[2] त्रिषु ॥ ४१६ ॥
क्लीबे तु खण्डलवणे धुस्तूरे नाथ तूस्तवाक् ।
स्याज्जटीभूतकेशेषु पापे धूलौ नपुंसके ॥ ४१७ ॥

नञ्याप इट् च ॥ ३—८७ ॥

केशकर्तनशिल्पे तु नापितः स्यात्

---

1. व्रतेपि B. & T.    2. शवे A.

**तनिमृङ्भ्यां किच्च ॥ ३—८८ ॥**

तंतं पुनः ।
वीणादिवाद्ये ना वायौ स्याद्व्याप्ते विस्तृतेऽन्यवत्[1] ॥ ४१८ ॥
मृतं तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु ।

**अञ्जिघृसिभ्यः क्तः ॥ ३—८९ ॥**

परिच्छिन्नेऽक्तमाज्ये के घृतं दीप्तेऽभिधेयवत् ॥ ४१९ ॥
सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री ।
ऋतमुञ्छशिले[2] सत्ये जले दीप्ते च पूजिते ॥ ४२० ॥
मुहूर्तोऽस्त्री घटीयुग्मे

**दुतनिभ्यां दीर्घश्च ॥ ३—९० ॥**

दूतः प्रेष्ये द्वयोर्भवेत् ।
तातोनुकम्प्ये जनके, शीता लाङ्गलपद्धतौ ॥ ४२१ ॥
स्वर्गगङ्गारामपत्न्योः हिमस्पर्शे नपुंसकम् ।
त्रिषु तद्वति मन्दे च वहुवारतरौ तु ना ॥ ४२२ ॥
सीता लाङ्गलपद्धतिवैदेहीस्वर्गगङ्गासु ।

**जेर्मूट् चोदात्तः ॥ ३—९१ ॥**

जीमूतः स्याद्भृतिकरे शक्रेऽद्रौ घोषके घने ॥ ४२३ ॥

**लोष्टपलितौ ॥ ३—९२ ॥**

लोष्टोऽस्त्री मृत्तिकापिण्डे, पलितं पङ्कतापयोः[3] ।
शैलजे केशपाके च

**हृश्याभ्यामितन् ॥ ३—९३ ॥**

दूर्वायां हरिता स्त्रियाम् ॥ ४२४ ॥

---

1. विस्मृते B. 2. ....मुञ्छे शिले A. & T.
3. पिण्डतापयोः T.

हरिद्वर्णयुते वाच्यलिङ्गः, श्येतस्तु पाण्डुरे ।

**रुहे रश्च लो वा ॥ ३—९४**

रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने ॥ ४२५ ॥

पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे ।
लोहितं रक्तगोशीर्षकुङ्कुमाजिकुचन्दने ॥ ४२६ ॥

पुमान्नदान्तरे भौमे वर्णे च त्रिषु तद्वति ।

**पिशेः किच्च ॥ ३—९५**

भवेत्तु पिशितं मांसे जटामांस्यां तु तत् स्त्रियाम् ॥ ४२७ ॥

**श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥ ३—९६ ॥**

श्रवाय्यः स्याद्यज्ञपशौ श्रवणीयेऽपि कीर्त्यते ।
दक्षाय्यो गरुडे गृद्ध्रे, स्पृहयाय्यः स्पृहावति ॥ ४२८ ॥

गृहयाय्यो गृहपतौ

**दिधिषाय्यः[1] ॥ ३—९७ ॥**

दिधिषाय्यस्तु धारके ।

दधिषाय्यं भवेदाज्ये

**वृञ एण्यः ॥ ३—९८ ॥**

वरेण्यः श्रेष्ठ इष्यते ॥ ४२९ ॥

**स्तुवः क्सेय्यश्छन्दसि[2] ॥ ३—९९ ॥**

स्तुषेय्यः स्तवनीये स्यात्, स्तुवेय्यः स्तावकेन्द्रयोः ।

**राजेरन्यः ॥ ३—१०० ॥**

राजन्यः स्याद्वीतिहोत्रे दीप्तिक्षत्रिययोरपि ॥ ४३० ॥

**शॄरम्योश्च ॥ ३—१०१ ॥**

---

1. दधिषाय्यः Ujj.    2. केय्यश्छन्दसि Ujj.

शरण्यः शरणार्हे स्याद्, रमण्यो रमणीयके ।

**अर्तेर्निच्च ॥ ३—१०२ ॥**

वने त्वरण्यं

**पर्जन्यः ॥ ३—१०३ ॥**

पर्जन्यो मेघे तच्छब्दशक्रयोः ॥ ४३१ ॥

**वदेरान्यः ॥ ३—१०४ ॥**

वदान्यो वाग्मिनि त्यागिनि

**अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥ ३—१०५ ॥**

अथामत्रं तु भाजने ।
नक्षत्रं भे, यजत्रं तु स्याद्यष्टव्याग्निहोत्रयोः ॥ ४३२ ॥

वधत्रं शस्त्रविपयोः, पतत्रं तु तनूरुहे ।

**गडेरादेश्च कः ॥ ३—१०६ ॥**

कडत्रं च कलत्रं च भवेतां श्रोणिभार्ययोः ॥ ४३३ ॥

**वृञश्चित् ॥ ३—१०७ ॥**

वरत्रा तु भवेद्वर्ध्रा

**सुविदेः कत्रन् ॥ ३—१०८ ॥**

सुविदत्रं कुटुम्बके ।

**कृतेर्नुम् च ॥ ३—१०९ ॥**

लाङ्गले चाथ कृन्तत्रं छेदने वेष्टने वने ॥ ४३४ ॥

**भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् ॥ ३—११० ॥**

रामानुजे तु दौष्यन्तौ नाट्यशास्त्रे मुनौ नटे ।
भरतो, मरतो मृत्यौ, दर्शतः सोमसूर्ययोः ॥ ४३५ ॥

यजतो यजमानर्त्विग्यष्टव्येष्वथ पर्वतः ।
देवर्षिभेदे शैलेऽगे शाकमत्स्यप्रभेदयोः ॥ ४३६ ॥

पचतो वह्निरव्योः स्यादमतो मृत्युरोगयोः ।
तृष्णापरे स्यात्तमतो, नमतः प्रह्वशब्दयोः ॥ ४३७ ॥

हर्यतः पवने सर्वैः स्पृहणीये हयेऽपि च ।
दरतस्त्वादरवति, शयतः शयितर्यपि ॥ ४३८ ॥

**पृषिरञ्जिभ्यां कित् ॥ ३—१११ ॥**

पृषतो बिन्दुमृगयोः श्वेतबिन्दुयुते त्रिषु ।
रजतं त्रिषु शुक्ले स्यात् क्लीबं दुर्वर्णहारयोः ॥ ४३९ ॥

**खलतिः ॥ ३—११२ ॥**

अकेशमूर्ध्नि खलतिः

**शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ॥ ३—११३ ॥**

शयथोऽजगरे घृणौ ।
विश्वासहेतौ शपथो, रवथः कोकिले मतः ॥ ४४० ॥

गमथः पथिके मार्गे, वञ्चथः क्रोष्टुधूर्तयोः ।
वन्दथः स्तोतरि स्तुत्ये, आयुष्मति तु जीवथः ॥ ४४१ ॥

प्राणथः स्याद्बलवति क्लान्तौ तु क्लमथो मतः[1] ।

**भृञश्चित् ॥ ३—११४[2] ॥**

भरथो लोकपाले स्यात्

**रुदिविदिभ्यां ङित् ॥ ३—११५ ॥**

रुदथः शिश्वसत्वयोः ॥ ४४२ ॥

कौलेयके स्याद्रुदथो, विदथो ज्ञातरि स्मृतः ।

**उपसर्गे वसेः ॥ ३—११६ ॥**

---

1. After this B. adds the line 'दमथस्तु दमे दण्डे रामथः शान्तिमन्त्रिणोः ।'
2. This Sūtra comes after 115 and 116 according to Ujj.

भवेदावसथो गेहे, ग्रामे संवसथो भवेत् ॥ ४४३ ॥

**अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् — ॥ ३—११७ ॥**

अतसस्त्वात्मवाय्वोः स्यात् क्षुमायामतसी भवेत् ।
अवसो राज्ञि सूर्ये च, चमसः सोमभाजने ॥ ४४४ ॥

न स्त्री स्यात् पिष्टके तु स्त्री, तमसः स्यात्तमस्यपि ।
अनुकूले तु नमसो, रभसो वेगहर्षयोः ॥ ४४५ ॥

लभसो धनयाचित्रोराकाशे नभसो भवेत् ।
तपसो विहगे चन्द्रे, पतसः पक्षिचन्द्रयोः ॥ ४४६ ॥

पनसः कण्टकिफले कण्टके वानरान्तरे ।
स्त्रियां रोगप्रभेदे स्यात्, पणसः पण्यवस्तुनि ॥ ४४७ ॥

ज्ञाने तु महसं

**वेञस्तुट् च ॥ ३—११८ ॥**

वृक्षभेदे स्याद्वेतसः पुमान् ।
स्यात्तु तामरसं पद्मे, साध्वसं प्रतिभाक्षये ॥ ४४८ ॥

कीकसं त्वस्थिनि भवेत्, तरसं मांस इष्यते ।

**वहियुभ्यां णित् ॥ ३—११९ ॥**

वाहसोऽजगरे ख्यातो, यावसस्तृणसंहतौ ॥ ४४९ ॥

**वयश्च ॥ ३—१२० ॥**

वायसः करटे ख्यातो

**दिवः कित् ॥ ३—१२१ ॥**

दिवसं वासरेऽस्त्रियाम् ।

**कृशृशलिकलिगर्दिभ्योऽभच् ॥ ३—१२२ ॥**

करभो मणिबन्धादाकनिष्ठे चोष्टतज्जयोः ॥ ४५० ॥

शरभः पशुराजे[1] स्यात्करभे वानरान्तरे ।
पतङ्गे शलभो, हस्तिशावके कलभोऽपि च ॥ ४५१ ॥

गर्दभं श्वेतकुमुदे ना तु गन्धान्तरे खरे ।
रोगभित्क्षुद्रजन्त्वोः स्त्री

**ऋषिवृषिभ्यां कित् ॥ ३—१२३ ॥**

ऋषभस्त्वौषधान्तरे ॥ ४५२ ॥

स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः ।
उत्तरस्थः स्मृतः श्रेष्ठे, स्त्री नराकारयोषिति ॥ ४५३ ॥

शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता ।
वृषभः श्रेष्ठवृषयोः

**रुषेर्नित् लुष् च ॥ ३—१२४ ॥**

लुषभो मत्तदन्तिनि ॥ ४५४ ॥

**रासिवल्लिभ्यां च ॥ ३—१२५ ॥**

रासभो गर्दभे प्रोक्तो, वल्लभः स्वामिनि प्रिये ।
सल्लक्षणहये च

**जॄविशिभ्यां झच् ॥ ३—१२६ ॥**

अथो जरन्तो महिषे मतः ॥ ४५५ ॥

वेशन्तः पल्वलेऽर्हन्तो जिने

**रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥ ३—१२७ ॥**

रोहन्तवाक् तरौ ।
नन्दन्तस्तनये प्रोक्तो, भवेज्जीवन्त औषधे ॥ ४५६ ॥

प्राणन्तस्तु भवेद्वाते

---

1. पक्षिराजे B.

**तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥ ३—१२८ ॥**

तरन्तः स्यात्सरस्वति ।
नावि स्त्रियां, भवन्तस्तु काले, वायौ[1] वहन्तवाक् ॥ ४५७ ॥
वसन्तः पुष्पसमये, भासन्तस्तूष्णदीधितौ ।
साधन्तः स्यात्परिव्राजि, गण्डयन्तस्तु वारिदे ॥ ४५४ ॥
मण्डयन्तो भूषणे स्याज्जयन्तस्तु शचीसुते ।
नन्दयन्तो नन्दके स्यात्

**हन्तेर्मुट् हि च ॥ ३—१२९ ॥**

हेमन्त ऋतुभिद्यपि ॥ ४५९ ॥

**भन्देर्नलोपश्च ॥ ३—१३० ॥**

भदन्तः स्यात् प्रव्रजिते

**ऋच्छेररः ॥ ३—१३१ ॥**

ऋच्छरा वारयोषिति ।
जर्जरं शैवले शक्रध्वजे त्रिषु जरन्नरे ॥ ४६० ॥
झर्झरो जर्झरस्तुर्ययुगे वाद्ये नदान्तरे ।
कदरः स्याद्विट्खदिरे, कर्कन्ध्वां बदरी भवेत् ॥ ४६१ ॥
मन्दरः पर्वतेऽथाम्बुकणभेदेषु शीकरः ।
कन्दरागगुहायां स्यात्, शबरो म्लेच्छभिद्यपि ॥ ४६२ ॥
कर्परं मृद्विकारे स्यात्, समरो युद्धकर्मणि ।
अम्बरं वस्त्र आकाशे, पिञ्जरं[2] पिङ्गले मतः ॥ ४६३ ॥
उपकरणबाहुल्यदर्शे त्वाडम्बरो भवेत् ।

**अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ॥ ३—१३२ ॥**

छदे कपाटेऽररं स्यात्, कमरः कार्मुकेऽपि च[3] ॥ ४६४ ॥

---

1. वासे & A. T. 2. पिञ्जरः B.
3. कार्मुके भवेत् T.

भ्रमरः कामुके भृङ्गे, चमरं चामरे भवेत् ।
स्त्री मञ्जरीमृगभिदोः, देवरः पतिसोदरे ॥ ४६५ ॥
वासरोऽस्त्री च दिवसे, वाशरः कोकिले मतः ।

**कुवः क्ररन् ॥ ३—१३३ ॥**

कुररः पक्षिभेदेः

**अङ्गिमदिमन्दिभ्य आरन् ॥ ३—१३४ ॥**

अथास्त्रियामङ्गार उल्मुके ॥ ४६६ ॥
ना भौमेऽथ मदारः स्याद्वाराहे हस्तिधूर्तयोः ।
मन्दारः स्याद्देववृक्षे[1] पारिभद्रार्कपर्णयोः ॥ ४६७ ॥
पारिभद्रे तु मन्दारुः

**गडेः कड् च ॥ ३—१३५ ॥**

कडारः कपिलेऽपि च ।

**भृङ्गारभृङ्गारौ ॥ ३—१३६ ॥**

शृङ्गारः सुरते नाट्ये रसे च गजमण्डने ॥ ४६८ ॥
नपुंसकं लवङ्गेऽपि नागसम्भवचूर्णयोः ।
भृङ्गारी झिल्लिकायां स्यात् कनकालौ पुनः पुमान् ॥ ४६९ ॥

**कञ्जिमृजिभ्यां चित् ॥ ३—१३७ ॥**

कञ्जारोऽर्कमुनिब्रह्मोदरवारणकेकिषु ।
व्यञ्जने चाथ मार्जार ओतुखट्वाङ्गयोरपि ॥ ४७० ॥

**कमेः किदुच्चोपधायाः ॥ ३—१३८ ॥**

कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके ।
बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने ॥ ४७१ ॥
कुमारी शैलतनयावनमाल्योर्नदीभिदि ।
सहापराजिताकन्याजम्बुद्वीपेषु च स्त्रियाम् ॥ ४७२ ॥

---

1. The portion रिभ्रद्रा....कपिलेऽपि च omitted in B.

**तुषारादयश्च ॥ ३—१३९ ॥**

हिमे तुषारः, सरसि कासारोऽथ सहारवाक् ।
आम्रभेदे

**दीङो नुट् च ॥ ३—१४० ॥**

अथ दीनारः सुवर्णाभरणे मतः ॥ ४७३ ॥

**सर्तेरपः षुक् च ॥ ३—१४१ ॥**

सर्षपः स्यात्सरिषपः सिद्धार्थे

**उषिकुटिदलिकचिखजिभ्यः कपन् ॥ ३—१४२ ॥**

अथोषपोऽनले ।
रवौ च, कुटपो मानभाण्डे, दलप आयुधे ॥ ४७४ ॥
कचपं शाकपत्रे स्यात्, खजपं वार्तृताप्सु च ।

**क्वणेः सम्प्रसारणं च ॥ ३—१४३ ॥**

**कपश्चाक्रवर्मणस्य ॥ ३—१४४ ॥**

कुणपः शवे दुर्गन्धे

**विटपविष्टपविशिपोलपाः ॥ ३—१४५ ॥**

विटपस्तु विटाधिपे ॥ ४७५ ॥
विस्तारे पल्लवे स्तम्बे शाखायामपि न स्त्रियाम् ।
विष्टपं पिष्टपं स्यातां भुवने, विशिपं गृहे ॥ ४७६ ॥
उलपस्तृणभेदे स्याद्गुल्मिन्यां त्वस्त्रियां भवेत् ।

**वृतेस्तिकन् ॥ ३—१४६ ॥**

वर्तिका शकुनेर्भेदे

**कृतिभिदिलतिभ्यः कित् ॥ ३—१४७ ॥**

कृत्तिका ऋक्षभिद्यपि ॥ ४७७ ॥
भित्तौ तु भित्तिका प्रोक्ता, निहाकायां तु लत्तिका ।

**इष्यशिभ्यां तकन् ॥ ३—१४८ ॥**

इष्टका मृद्विकारे स्यादष्टका पितृदैवते ॥ ४७८ ॥

**इणस्तशन्तशसुनौ ॥ ३—१४९ ॥**

एतशश्चैतशाश्चापि विप्रे स्यात्

**वीपतिभ्यां तनन् ॥ ३—१५० ॥**

वेतनं भृतौ ।

पत्तनं नगरे

**दृदलिभ्यां भः ॥ ३—१५१ ॥**

दर्भः कुशोऽथ ऋषिचक्रयोः ॥ ४७९ ॥

दल्भो भवेत्

**अर्तिगृभ्यां भन् ॥ ३—१५२ ॥**

अथार्भः स्यात्पोते सूक्ष्मेऽपि दृश्यते ।
गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके ॥ ४८० ॥

**इणः कित् ॥ ३—१५३ ॥**

इभः स्तम्बेरमे

**असिसञ्जिभ्यां क्थिन् ॥ ३—१५४ ॥**

अथास्थि धातावूरौ तु सक्थि च ।

**प्लुषिकुषिशुषिभ्यः क्सिः ॥ ३—१५५ ॥**

प्लुक्षिः कृशानावुदरे कुक्षिः, शुक्षिः प्रभञ्जने ॥ ४८१ ॥

**अशेर्नित् ॥ ३—१५६ ॥**

अक्षि नेत्रे भवेत्

**इषेः क्सुः ॥ ३—१५७ ॥**

इक्षुर्मधुरद्रव्यकारणे ।

**अवितॄस्तृतन्त्रिभ्यः ईः ॥ ३—१५८ ॥**

अवी रजस्वलायां स्यात्तरीः स्यान्नावि भाजने ॥ ४८२ ॥

स्तरीर्धूमाब्दयोस्तन्त्रीर्गुणे वीणादिकस्य च ।

शुष्कस्नायौ च वादित्रे

**यापोः किद् द्वे च ॥ ३—१५९ ॥**

ययीरश्वापवर्गयोः ॥ ४८३ ॥

पपीः सोमे च सूर्ये च

**लक्षेर्मुट् च ॥ ३—१६० ॥**

लक्ष्मीः सम्पत्तिशोभयोः ।

ऋद्धौ वृद्धौ च पद्मायां फलिन्यां लक्ष्म्यपीष्यते ॥ ४८४ ॥

इत्युणादिकोशे

॥ तृतीयपादीयनामसंग्रहः ॥

---

श्रीः

## ॥ अथ चतुर्थः पादः ॥



**वातप्रमीः ॥ ४—१ ॥**

वातप्रमीर्वातमृगे द्वयोर्वातप्रमी स्त्रियाम् ।

**ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कतिज्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः[1] ॥ ४—२ ॥**

बद्धमुष्टिकरे रत्निः, अरत्निः प्रसृताङ्गुलौ ॥ ४८५ ॥

तन्यतुर्वायुरात्र्योः स्यान्मेघगर्जितयोः पवौ ।
अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि च ॥ ४८६ ॥

वनिष्ठु स्थविरान्त्रे स्यादपमानेऽपि कीर्त्यते ।
अञ्जिष्ठश्चण्डकिरणे, तत्राञ्जिष्णुरपीष्यते ॥ ४८७ ॥

अर्पिसस्त्वग्रमांसे स्यान्मत्स्यः स्यान्मीनदेशयोः ।
अतिथिः कुशपुत्रे[2] स्यात् पुमानागन्तुके त्रिषु ॥ ४८८ ॥

अङ्गुलिः करशाखायां कर्णिकायां गजस्य च ।
कवसोऽपि च सन्नाहे भवेत्कण्टकभिद्यपि ॥ ४८९ ॥

कवचो गर्दभाण्डे च सन्नाहे पर्पटेऽपि च ।
दुःस्पर्शायां यवासोऽथ कृशानुः कृष्णवर्त्मनि ॥ ४९० ॥

**श्रः करन् ॥ ४—३ ॥**

शर्करा खण्डविकृतावुपलाकर्परांशयोः ।

---

1. इष्णुच् instead of इष्ठच्. See Perusūri. In the Calcutta edition of Ujj इष्णुच् is wrongly given for इष्ठुच् thereby taking वनिष्णु instead of वनिष्ठु

2. कुशपत्ते T

शर्करान्वितदेशे च रुग्भेदे[1] शकलेऽपि च ॥ ४९१ ॥

**पुषः कित् ॥ ४—४ ॥**

पुष्करं खाम्बुपद्मेषु शुण्डाग्रे कुष्ठकाण्डयोः ।
तूर्यवक्त्रे खड्गफले तीर्थद्वीपभिदोरपि ॥ ४९२ ॥

ना [2]रोगनागविहगनृपभेदेषु वारुणौ ।

**कलंश्च ॥ ४—५ ॥**

पूर्णे श्रेष्ठे पुष्कलः स्यात्

**गमेरिनिः ॥ ४—६ ॥**

भविष्यद्गमने गमी ॥ ४९३ ॥

**आङि णित् ॥ ४—७ ॥**

भाव्यागमन आगामी

**भुवश्च ॥ ४—८ ॥**

स्यात्तु भावी भविष्यति ।

**प्रे स्थः ॥ ४—९ ॥**

प्रस्थायी गन्तुमनसि

**परमे कित् ॥ ४—१० ॥**

परमेष्ठी पितामहे ॥ ४९४ ॥

**मन्थः ॥ ४—११ ॥**

मन्था मन्थनदण्डे च वज्रे[3] वातेऽपि च स्मृतः ।

**पतस्थ च ॥ ४—१२ ॥**

---

1. ऋग्भेदे A, B & T. But see *Maṅkhakośa* ' रोगभेदश्च शर्करा' (741)
2. राग A. B & T. For the corrct reading रोग see *Anekārthasaṅgraha*
3. व्रजे A. B. T. See Perusūri IV, 48

पन्था मार्गे, ऋभुक्षास्तु शक्रे

**खजेराकः ॥ ४—१३ ॥**

अथो बन्धकीजने ॥ ४९५ ॥

विहगेऽपि खजाकः स्त्री दर्व्यां, मन्दाकमिष्यते ।
स्तोत्रे स्रोतसि च क्लीबे

**वलाकादयश्च ॥ ४ – १४ ॥**

वलाकस्तु बके मतः ॥ ४९६ ॥

कामुकीबिसकण्ठ्योश्च बकपङ्क्तावपि स्त्रियाम् ।
शलाका शल्यमदनशारिकासल्लकीषु च ॥ ४९७ ॥

सूच्यामञ्जनयष्टौ च, पताकाङ्के ध्वजेऽपि च ।
सौभाग्ये वैजयन्त्यां च, मनाकेभ्यां प्रकीर्तिता ॥ ४९८ ॥

**पिनाकादयश्च ॥ ४—१५ ॥**

पिनाकोऽस्त्री रुद्रचापे पांसुवर्षत्रिशूलयोः ।
प्रभायां तु तडाका स्यात्, पिण्याकस्तिलकल्कके ॥ ४९९ ॥

वाल्हीके सिल्हके हिङ्गुद्रव्ये, व्योम्नि नभाकवाक् ।
पटाका पक्षिजातौ स्यात्, श्यामाको धान्यभिद्यपि ॥ ५०० ॥

**कषिदूषिभ्यामीकन् ॥ ४—१६ ॥**

कषीका पक्षिजातौ स्याद्, दूषीका नेत्रयोर्मले ।

**अनिहृषिभ्यां किच्च ॥ ४—१७ ॥**

अनीकोऽस्त्री रणे[1] सैन्ये, हृषीकमपि चेन्द्रिये ॥ ५०१ ॥

**चङ्कणः कङ्कण च ॥ ४—१८ ॥**

घण्टिकायां कङ्कणीका

**शॄपॄवृञां द्वे रुक् चाभ्यासस्य ॥ ४—१९ ॥**

---

1. गणे A.

शर्करीकस्तु हिंसके ।
पर्परीकोऽर्थम्णि, वक्रकेशे[1] स्याद्बर्वरीकवाक् ॥ ५०२ ॥

**पर्फरीकादयश्च ॥ ४—२० ॥**

पर्फरीकं किसलये स्याद्विदारयितर्यपि ।
पालके पूरयितरि, वादित्रे दर्दरीकवाक् ॥ ५०३ ॥

झर्झरीकं शरीरे स्यात्, तिन्तिडीकस्तरोर्भिदि ।
मर्मरीको हीनजने, चञ्चरीकस्त्वलौ मतः ॥ ५०४ ॥

भवेच्च कर्करीकालौ, पुण्डरीकं तु भेषजे ।
सितच्छत्रे सिताम्भोजे पुंसि व्याघ्रेऽग्निदिग्गजे ॥ ५०५
कोशकारविशेषे

**इषेः कित्, ह्रस्वश्च ॥ ४—२१ ॥**

अथो इषीका वीरणाग्रके ।
भवेच्छरशलाकायां

**ऋजेश्च ॥ ४—२२ ॥**

उपहते त्वृजीकवाक् ॥ ५०६ ॥

**सर्तेर्नुक् च[2] ॥ ४—२३ ॥**

लालायां तु सृणीका स्यात्

**मृडः कीकच्कङ्कणौ[3] ॥ ४—२४ ॥**

मृडीकोऽपि मृगे मतः ।
मृडङ्कणः शिशौ प्रोक्तः, कङ्कणं करभूषणे ॥ ५०७ ॥

---

1. वक्रवंशे T.
2. नुम् च Sid. नु च Śv. & Nārāyaṇa
3. कीककङ्कणौ Sid.

**अलीकादयश्च ॥ ४—२५ ॥**

अलीकमप्रिये भाले वितथे दिवि च स्मृतम् ।
व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने ॥ ५०८ ॥

ना नागरे, वलीकं तु पटलप्रान्त इष्यते ।
वल्मीकं वामलूरेऽस्त्रि, वाहीकोऽश्वे[1] तथा गवि ॥ ५०९ ॥

सुप्रतीको दिग्गजे स्याच्छमीक ऋषिभिद्यपि ।

**कृतृभ्यामीषन् ॥ ४—२६ ॥**

करीषस्तु भवेच्छुष्कगोमये, नावि तु प्लवे ॥ ५१० ॥

तरीतरि तरीषः स्यात्

**शॄपॄभ्यां किच्च ॥ ४—२७ ॥**

शिरिषस्तरुभिद्यपि ।

गूथे पुरीषः[2]स्यात्

**अर्जेर्ऋजश्च ॥ ४—२८ ॥**

पिष्टपचने तु ऋजीषवाक् ॥ ५११ ॥

स्यादुद्धृतरसे सोमलताशेषेऽपि तद्भवेत् ।

**अम्बरीषः ॥ ४—२९ ॥**

अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे ॥ ५१२ ॥

नरकस्य प्रभेदे च किशोरे भास्करेऽपि च ।
आम्रातकेऽनुतापे च पुंस्यपि भ्राष्ट्र इष्यते[3] ॥ ५१३ ॥

**कॄशॄपॄकटिपटिशौटिभ्य ईरन् ॥ ४—३० ॥**

वंशाङ्कुरे करीरोऽस्त्री वृक्षगिद्धटयोः पुमान् ।
करीरा चीरिकायां च दन्तमूले च दन्तिनाम् ॥ ५१४ ॥

---

1. वाहीकश्च T.
2. पुरीषं B.
3. भ्राष्ट्र इत्यपि. T.

शरीरमस्त्री देहे स्यात्, परीरं तु फले भवेत् ।
भवेज्जघनदेशे च कटीरः[1] कन्दरेऽपि च ॥ ५१५ ॥

पटीरश्चन्दने कामे कन्दुके, त्यागिवीरयोः ।
तु शौटीरोऽथ[2] हिण्डीरो डिण्डीरोऽब्धिकफे भवेत् ॥ ५१६ ॥

किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे ।

**वशः कित् ॥ ४—३१ ॥**

उशीरमस्त्री नलदे

**कशेर्मुट् च ॥ ४—३२ ॥**

कश्मीरो देशभिद्यपि ॥ ५१७ ॥

**कृञ उच्च ॥ ४—३३ ॥**

कुरीरं मैथुनेऽथो स्यात् कुलीरः कर्कटेऽपि च ।

**घसेः किच्च ॥ ४—३४ ॥**

क्षीरं दुग्धेऽप्सु

**गभीरगम्भीरौ ॥ ४—३५ ॥**

निम्ने तु गम्भीरं सगभीरकम् ॥ ५१८ ॥

**विषा विहा ॥ ४—३६ ॥**

विषा बुद्धौ, विहा स्वर्गे स्वभावादव्यये इमे ।

**पच एलिमच् ॥ ४—३७ ॥**

पचेलिमो वह्निरव्योः

**शीङो धुग्लग्वलञ्वालनः ॥ ४—३८ ॥**

शीधु मद्ये[3]ऽस्त्रियां भवेत् ॥ ५१९ ॥

शीलं स्वभावे सद्वृत्ते, जलनील्यां तु शैवलः ।

---

1. कटीरं T.
2. शौटीरोप्यथ T.
3. मध्ये T.

अस्त्री क्लीबं पद्मकाष्ठे जलनील्यां पुनर्द्वयम् ॥ ५२० ॥

शेवालमपि शेपालं

**मृकणिभ्यामूकोकणौ ॥ ४—३९ ॥**

मरूको मृग इष्यते ।

काणूकः काके

**वलेरूकः ॥ ४—४० ॥**

वल्लूको विहगोत्पलमूल्योः[1] ॥ ५२१ ॥

**उलूकादयश्च ॥ ४—४१ ॥**

उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि ।
वावदूको वक्तरि स्याद्, भल्लूको भल्लुकोऽपि च ॥ ५२२ ॥

भालूकश्च त्रयोऽप्यृक्षे, शम्बूकः शम्बुकस्तथा ।
भवेत्करटिकुम्भान्ते शूद्रतापसघोङ्घयोः ॥ ५२३ ॥

जम्बूकः फेरवे नीचे पश्चिमाशापतावपि ।
बन्धुकं बन्धुजीवे स्यात् पुंलिङ्गः पीतसारके ॥ ५२४ ॥

मधूको वृक्षभेदे स्याद्, वास्तूकः शाकभिद्यपि ।

**शलिमण्डिभ्यामूकण् ॥ ४—४२ ॥**

मूले सौगन्धिकादीनां शालूकं कन्दभिद्यपि ॥ ५२५ ॥

मण्डूको दर्दुरे

**नियो मिः ॥ ४—४३ ॥**

नेमिस्तिनिशे नास्त्रियां पुनः ।
कूपत्रिकायां चक्रान्ते, यामिः स्वसृकुलस्त्रियोः ॥ ५२६ ॥

जामिश्च

---

1. त्पलवातयोः A. & B.

**अर्तेरूच्च ॥ ४—४४ ॥**

अथ द्वयोरूर्मिर्वीच्यां भङ्गप्रकाशयोः ।
वस्त्रसङ्कोचरेखायां वेदनापीडयोर्जवे[1] ॥ ५२७ ॥

**भुवः कित् ॥ ४—४५ ॥**

भूमिर्वसुन्धरायां स्यात्स्थानमात्रे च भूम्यपि ।

**अश्नाते रश्च ॥ ४—४६ ॥**

रश्मिः पुमान् दीधितौ स्यात्पक्षप्रग्रहयोरपि ॥ ५२८ ॥

**दल्मिः[2] ॥ ४—४७ ॥**

**वीज्याज्वरिभ्यो निः ॥ ४—४८ ॥**

वेणिर्वेणी च विन्यासे केशानां देवताडके ।
नद्यादेरन्तरे चाथ, प्रवेणी केशबन्धने ॥ ५२९ ॥
ज्यानिः स्रवन्त्यां हानौ च, जूर्णिः स्त्री रुजि कीर्त्यते ।
क्षोणिः क्षोणी पृथिव्यां स्यात्, क्रेणिः क्रेणी क्रयेऽपि च ॥ ५३०

**सृवृषिभ्यां कित् ॥ ४—४९ ॥**

सृणिर्द्वयोरङ्कुशे स्याद्, वृष्णिर्यादवमेषयेः ।
पाषण्डचण्डयोश्च

**अङ्गेर्नलोपश्च ॥ ४—५० ॥**

अथो अग्निर्वह्नौ च चित्रके ॥ ५३१ ॥

**वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ॥ ४—५१ ॥**

वह्निरग्नौ चित्रके च, श्रेणिः पङ्क्तौ द्वयोर्भवेत् ।
समानशिल्पिसङ्घाते, निश्रेणिस्त्वधिरोहणे ॥ ५३२ ॥
कटौ श्रोणिर्द्वयोर्योनिराकरे स्मरमन्दिरे ।
द्रोणिर्देशे च सेचन्यां, ग्लानिर्दौर्बल्य इष्यते ॥ ५३३ ॥

---

1. जने A.

2. दल्मिः = इन्द्रायुधम् ।

हानिः क्षयापचययोः, तूर्णिर्माने भवेदपि ।
म्लानिर्ग्लानौ, शिनिः क्षत्रे

**घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ॥ ४—५२ ॥**

अथांशौ ज्वालातरङ्गयोः ॥ ५३४ ॥

घृणिः, पृश्निस्त्वल्पतनौ, पार्ष्णिः स्यादुन्मदस्त्रियाम् ।
स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च ॥ ५३५ ॥

चूर्णिः कपर्दकशते महाभाष्ये कपर्दके ।
धारके पोषके पृथ्व्यां भूर्णिः

**वृदृभ्यां विन् ॥ ४—५३ ॥**

वर्विस्तु घस्मरे ॥ ५३६ ॥

सूपकारोपकरणे दर्विः

**जृशॄस्तृजागृभ्यः क्विन् ॥ ४—५४ ॥**

जीर्विः पशौ भवेत् ।
शीर्विर्हिंस्रे भवेत्, स्तीर्विरध्वर्यौ, जागृविर्नृपे ॥ ५३७ ॥

**दिवो दीर्घश्चाभ्यासस्य ॥ ४—५५ ॥**

दीदिविर्धिषणे स्वर्गे [1] भक्षे नान्ने तु सोऽस्त्रियाम् ।
द्योतमाने त्रिषु

**कृत्रिघृष्विच्छविस्थविकिकीदिवि ॥ ४—५६ ॥**

कृविस्तन्तुवायस्य वस्तुनि ॥ ५३८ ॥

घृष्विर्वराहे कामानां वर्षकेऽथ छविः स्त्रियाम् ।
शोभारुच्योः स्थविस्तन्तुवाये, अथ किकीदिविः ॥ ५३९ ॥

किकिदीविः किकिदिविश्चापे व्याघ्रे

**पातेर्डतिः ॥ ४—५७ ॥**

---

1. The portion स्वर्गे....छविः स्त्रियाम् (539) is missing in T.

पतिर्धवे ।

ना त्रिष्वीशे

**शकेर्ऋतिन् ॥ ४—५८ ॥**

शकृद्गूथे, कालखण्डे यकृद्भवेत् ॥ ५४० ॥

**अमेरतिः ॥ ४—५९ ॥**

अमतिर्ना विधौ काले

**वहिवस्यर्तिभ्यश्चित् ॥ ४—६० ॥**

वहतिः सचिवे गवि ।

पवने, वसतिस्तु स्याद्वासे रात्रौ निकेतने ॥ ५४१ ॥

क्रोधेऽरतिः

**अञ्चेः को वा ॥ ४—६१ ॥**

अथो वायौ भवेदङ्कतिरञ्चतिः ।

**हन्तेरंह च ॥ ४—६२ ॥**

अंहतिश्चांहितिर्दाने

**रमेर्नित् ॥ ४—६३ ॥**

रमतिः कालकामयोः[1] ॥ ५४२ ॥

मालती पुष्पभेदे स्याद्, वल्ल्यां तु व्रततिर्भवेत् ।

स्थपतिः स्वामिनि भवेदलतिर्गृहमातृका ॥ ५४३ ॥

**सूङः क्रिः ॥ ४—४६ ॥**

सूरिः सूरी पण्डिते स्यात्

**अदिशदिभूशुभिभ्यः क्रिन् ॥ ४—६५ ॥**

अद्रिः शैले द्रुमे रवौ ।

शद्रिस्तु शर्करायां स्याद्, भूरिर्विष्णौ विधौ हरे ॥ ५४४ ॥

---

1. B. adds 'रमतिर्क्लिदिवेऽपि स्यात् रमतिर्नायके च ना ।'

नपुंसकः सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकः ।
शुभ्रिर्ब्रह्मणि

**वङ्क्र्यादयश्च ॥ ४—६६ ॥**

वङ्क्रिस्तु वाद्यभिद्गृहदारुणोः ॥ ५४५ ॥

पार्श्वास्थ्नि वप्रिः क्षेत्रे स्यादंह्रिरङ्घ्रिर्भवेत्पदे ।
निद्राप्रमीलयोर्मोहे तन्द्रिर्वाद्ये तु भेरिवाक् ॥ ५४६ ॥

**राशदिभ्यां त्रिप् ॥ ४—६७ ॥**

रात्री रजन्यां, शत्रिर्ना मेघकुञ्जरजिष्णुषु ।
राजर्षिभेदे च भवेत्

**अदेस्त्रिनिश्च[1] ॥ ४—६८ ॥**

अत्री भक्षकपापयोः ॥ ५४७ ॥

अत्रिर्ऋषौ

**पतेरत्रिन् ॥ ४—६९ ॥**

पतत्रिस्तु विहगे

**मृकणिभ्यामीचिः ॥ ४—७० ॥**

अथ मरीचिवाक् ।
कृपणे रश्मिदीप्त्योश्च मुनिभेदेऽपि दृश्यते ॥ ५४८ ॥
वल्ल्यां पुष्पितलतागुञ्जयोर्निनदेऽनसि ।
कणीचिः स्त्री

**श्वयतेश्चित् ॥ ४—७१ ॥**

श्वयीचिस्तु व्याधौ

**वेञो डिच्च ॥ ४—७२ ॥**

वीचिः सुखाल्पयोः ॥ ५४९ ॥

---

1. अदेस्त्रिन् Ujj. For a discussion of the correct reading see *Praudha manoramā*

अवकाशे तरङ्गे चावीचिस्तु नरकान्तरे ।

**ऋहनिभ्यामूषन् ॥ ४—७३ ॥**

स्यादरूषश्चण्डरश्मौ, हनूषो राक्षसेऽपि च ॥ ५५० ॥

**पुरः कुषन् ॥ ४— ७४ ॥**

पुरुषः पुरुषे साङ्ख्यज्ञे च पुन्नागपादपे ।

**पॄनहिकलिभ्य उषच् ॥ ४—७५ ॥**

परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत् ॥ ५५१ ॥

नहुषो राजभेदे स्यान्नागभेदेऽपि च स्मृतः ।

कलुषं त्वाविले पापे

**पीयेरूषन् ॥ ४—७६ ॥**

पीयूषममृते भवेत् ॥ ५५२॥

सप्तरात्रावधिक्षीरे, क्षीरे पेयूषवाङ् नवे ।

**मस्जेर्नुम् च ॥ ४—७७ ॥**

मञ्जूषा पेटके

**गण्डेश्च ॥ ४—७८ ॥**

अथो स्याद्गण्डूषः प्रसृतोन्मिते ॥ ५५३ ॥

मुखपूर्ताम्भसि तथा पुष्करे न नपुंसके ।

**अर्तेररुः ॥ ४—७९ ॥**

अररुस्त्वायुधे शत्रौ

**कुटः किच्च ॥ ४—८० ॥**

कुटरुर्वस्त्रमन्दिरे ॥ ५५४ ॥

**शकादिभ्योऽटन् ॥ ४—८१ ॥**

शकटोऽनसि न स्त्री स्यात्, सन्नाहे कङ्कटो भवेत् ।

देवटः शिल्पिनि भवेत्, करटो निन्द्यजीविनि ॥ ५५५ ॥

एकादशाहादिश्राद्धे कुसुम्भगजगण्डयोः ।
वायसे दुर्दुरूटेऽपि, वरटः कीटतद्भिदोः ॥ ५५६ ॥
वरटा हंसयोषायां, सरटः कृकलासके ।
मायायां कपटं न स्त्री, कक्खटं कठिने भवेत् ॥ ५५७ ॥
कर्कटः कचरे राशौ, मर्कटो वानरे मतः ।
पर्पटो माषविकृतौ, कर्पटं खर्परे मतम् ॥ ५५८ ॥
प्रसादे मयटः प्रोक्तश्चपेटाचपटौ तले ।

**कृकदिकडिकटिभ्योऽम्बच् ॥ ४—८२ ॥**

करम्बो मिश्रिते बान्तो, भान्तस्तु दधिसक्तुषु ॥ ५५९ ॥
कदम्बं निकुरुम्बे स्यात् नीपसर्षपयोः पुमान् ।
कलम्बः शाकभेदे स्यात् कदम्बशरयोः पुमान् ॥ ५६० ॥
कडम्बस्त्वग्रभागे स्याद्वादित्रे तु कटम्बवाक् ।

**कदेर्णित्पक्षिणि ॥ ४—८३ ॥**

कादम्बः स्यात् पुमान् पक्षिविशेषे सायकेऽपि च ॥ ५६१ ॥

**कलिकर्द्योरमः ॥ ४—८४ ॥**

कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च ।
पङ्के पापे कर्दमः स्यात्

**कुणिपुल्योः किन्दच् ॥ ४—८५ ॥**

कुणिन्दः शब्द इष्यते ॥ ५६२ ॥
पुलिन्दः शबरेऽलिन्दो भवनावयवान्तरे ।

**कुपेर्वा वश्च ॥ ४—८६ ॥**

स्यात् कुविन्दः कुपिन्दश्च तन्तुवाये

**नौ षञ्जेर्घथिन् ॥ ४—८७ ॥**

निषद्वथिः ॥ ५६३ ॥

आलिङ्गके

**उध्र्तेश्चित् ॥ ४—८८ ॥**

अथोदरथिः सिन्धौ

**सर्तेर्णिच्च ॥ ३—८९ ॥**

क्षत्तरि सारथिः ।

**खर्जिपिञ्जादिभ्य ऊरोलचौ ॥ ४ – ९० ॥**

खर्जूरं रूप्यफलयोः[1] खर्जूरः कीटवृक्षयोः ॥ ५६४ ॥

कर्पूरं घनसारेऽस्त्री, वल्लूरं शुष्कमांसके ।
मण्डूरं स्याल्लोहमले, शालूरो दर्दुरे मतः ॥ ५६५ ॥

कस्तूरी स्यान्मृगमदे, धुस्तूरः[2] कनकाह्वये ।
पिञ्जूलं कुशवर्तौ स्याल्लाङ्गूलं पुच्छशेफसोः ॥ ५६६ ॥

धान्याधारे कुसूलः स्यात्, ताम्बूलं क्रमुके भवेत् ।
ताम्बूली नागवल्ल्यां स्याच्छार्दूलो राक्षसान्तरे ॥ ५६७ ॥

व्याघ्रे च पशुभेदे च सत्तमे तूत्तरः स्थितः ।
कुकूलं शङ्कुसङ्कीर्णश्वभ्रे[3] ना तु तुषानले ॥ ५६८ ॥

दुकूलं श्लक्ष्णवसने क्षौमे चापि प्रकीर्तितम् ।
कञ्चूलमस्त्रियां चापि स्त्री गात्राभरणे भवेत् ॥ ५६९ ॥

**कुवश्चट् दीर्घश्च ॥ ४—९१ ॥**

चित्रलेखनिकायां स्यात् कूर्ची ना स्तनहस्तिनोः ।

**समीणः ॥ ४—९२ ॥**

समीचस्तु समुद्रे स्यात् समीची हरिणस्त्रियाम् ॥ ५७० ॥

**सिवेष्टेरू च ॥ ४—९३ ॥**

सूचो दर्भाङ्कुरे सूची सीवनेऽभिनयान्तरे ।

---

1. कलयोः A. 2. धत्तूरः T.
3. सङ्कीर्णे श्वभ्रे T. सङ्कीर्णश्वभ्रेषु ना A.

**शमेर्बन् ॥ ४—९४ ॥**

शम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ ॥ ५७१ ॥

शुभान्विते त्रिषु

**उल्बादयश्च ॥ ४—९५ ॥**

उल्बस्तु गर्भे गर्भाशयेऽपि च ।
शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ ॥ ५७२ ॥

बिम्बस्तु प्रतिबिम्बे स्यान्मण्डले पुंनपुंसकम् ।
बिम्बी वृक्षे फले क्लीबं कृकलासे पुनः पुमान् ॥ ५७३ ॥

पङ्के जम्बस्तरौ निम्बो, धन्वं धनुषि चेष्यते ।

**स्थः स्तोऽम्बजबकौ ॥ ४—९६ ॥**

स्तम्बो गुल्मे [1]लतादीनामप्रकाण्डद्रुमेऽपि च ॥ ५७४ ॥

स्तबकः पुष्पगुच्छे स्यात्

**शाशपिभ्यां दन् ॥ ४—९७ ॥**

शादः कर्दमशष्पयोः ।

शब्दो निनादे

**अब्दादयश्च ॥ ४—९८ ॥**

अब्दो वर्षे मुस्तायां जलदे पुमान् ॥ ५७५ ॥

कुन्दो माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना ।
वृन्दं समूहे, कन्दस्तु सूरणेऽथ महोदरे ॥ ५७६ ॥

तुन्दं, ककन्दस्तु नृपविशेषे च प्रयुज्यते ।

**वलिमलितनिभ्यः कयन् ॥ ४—९९ ॥**

वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसकम् ॥ ५७७ ॥

---

1. तृणादीनां B.

मलयो देश आरामे शैलांशे पर्वतान्तरे ।
त्रिवृतायां स्त्री,[1] तनयः पुत्रे पुत्र्यां स्त्रियां भवेत् ॥ ५७४ ॥

रुज्यामयः, किसलयं पल्लवे, गवयो मृगे ।

**वृह्वोः षुग्दुकौ च ॥ ४—१०० ॥**

आश्रये वृषयः, स्वान्ते हृदयं

**मीपीभ्यां रुः ॥ ४—१०१ ॥**

हेमपर्वते ॥ ५७९ ॥

मेरुः, सूर्ये [2]पेरुपारू

**जत्र्वादयश्च ॥ ४—१०२ ॥**

सन्धौ स्कन्धस्य जत्रु च ॥

शिग्रुः शोभाञ्जनतरौ, वितद्रुस्तु नदीभिदि ॥ ५८० ॥

कद्रुर्वर्णविशेषे स्यात्, चमूरुर्मृगभिद्यपि ।

**रुशातिभ्यां क्रुन् ॥ ४—१०३ ॥**

रुरुर्दैत्ये मृगे, शत्रुररौ

**जनिदाच्युसृवृमदिषमिनमिभृञ्भ्यः इत्वनत्वन्तण्क्रिन्शक्स्यढडटाटचः ॥ ४—१०४ ॥**

पित्रोर्जनित्ववाक् ॥ ५८१ ॥

यज्ञकर्मणि दात्वं स्यात् पुमान् दातरि च स्मृतः ।
च्यौलो गन्तर्यण्डजे च क्षीणपुण्ये तथा गतौ ॥ ५८२ ॥

सृणिश्चन्द्रेऽङ्कुशे वायौ, वृशो मूलक आर्द्रके ।
मत्स्यो मीनेऽथ षण्ढस्तु भवेदकृतदारके ॥ ५८३ ॥

रङ्गोपजीविनि नटो, भरटो भृतकेऽपि च ।
कुलाले

---

1. त्रिवृतिस्त्र्यथ तनयः A.　　2. पीरु A & B.

**अन्येभ्योऽपि दृश्यन्ते ॥ ४—१०५ ॥**

पेत्वममृतेऽथात्यर्थे भृशमिष्यते ॥ ५८४ ॥

प्रभञ्जने स्यात् सरटश्चिन्तायां ध्यात्वमिष्यते ।
होलो यष्टरि, लूनिस्तु व्रीहौ, कच्छस्तटे भवेत् ॥ ५८५ ॥

**कुसेरुम्भोमेदेताः ॥ ४—१०६ ॥**

कुसुम्भं हेमनि महारजने ना कमण्डलौ ।
कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः ॥ ५८६ ॥

कुसीदं जीवने वृध्या क्लीबं त्रिषु कुसीदके ।
[1]कुसिदमपि तद्वत्स्यात्, कुसितो नीवृति स्मृतः ॥ ५८७ ॥

**सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ॥**
**॥ ४—१०७ ॥**

सानसिः काञ्चने प्रोक्तो, वर्णसिः सलिले भवेत् ।
धर्णसिर्लोकपाले स्यात्, पर्णसिर्वार्गृहेऽपि च ॥ ५८८ ॥

तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमान् ।
अङ्कुशोऽस्त्री सृणौ, यूपकटके तु चषालवाक् ॥ ५८९ ॥

इल्वला तारकाभेदे[2] ना भेदे दैत्यमत्स्ययोः ।
पल्वलं त्वल्पसरसि, धिष्ण्यं स्थानर्क्षसद्मसु ॥ ५९० ॥

शक्तावस्त्री तु वह्नौ स्यात्, शल्यं क्ष्वेडे च तोमरे ।
इषौ शङ्कौ त्वस्त्रियां स्यान्ना श्वाविन्मदनद्रुमे ॥ ५९१ ॥

**मूङ्शक्यबिभ्यः क्रुः ॥ ४—१०८ ॥**

मूलं शिफाद्ययोर्मूलवितेऽन्तिक उदाहृतम् ।
शक्रः प्रियंवदेऽम्लुस्तु भवेत्साम्लो रसान्तरे ॥ ५९२ ॥

अम्ली चाङ्गेरिकायां स्यात्

---

1. कुसीत B. & T.
2. 'भेदे....त्वस्त्रियां' (593) is omitted in T.

**माछाससिसू[1]भ्यो यः ॥ ४—१०९ ॥**

मायः पीताम्बरेऽसुरे ।
शाम्बर्यां छद्मबुध्योः स्त्री, छाया सूर्यस्य योषिति ॥ ५९३ ॥

प्रतिबिम्बेऽनातपे च पालनोत्कोचदीप्तिषु ।
सच्छोभायां च पङ्क्तौ च, सस्यं गुणे फलेऽपि च ॥ ५९४ ॥

सव्यं वामे दक्षिणे च प्रतीपे चान्यवद्भवेत् ।
इतरस्मिन् भवेदन्यः, समस्या पूर्तिकाङ्क्षिणि ॥ ५९५ ॥

**जनेर्यक् ॥ ४—११० ॥**

जन्यं हट्टे[2] परीवादे सङ्ग्रामे च नपुंसकम् ।
जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् ॥ ५९६ ॥

त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः ।
वरस्निग्धेऽथ भार्यायां जाया

**अघ्न्यादयश्च ॥ ४—१११ ॥**

अघ्न्यस्तु प्रजापतौ ॥ ५९७ ॥

गवि स्त्र्यथ स्त्रियां कन्या कुमार्योषधिराशिषु ।
वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रियाम् ॥ ५९८ ॥

सन्ध्या पितृप्रसून्योश्चिन्तामर्यादयोरपि ।
प्रतिज्ञायां च सन्धाने युगसन्धिप्रसूनयोः ॥ ५९९ ॥

कुडचं भित्तावन्तराले मध्योऽहल्या मुनिस्त्रियाम् ।

**स्नामदिपद्यर्तिपृशकिभ्यो वनिप् ॥ ४—११२ ॥**

स्नावा स्याद्रसिके मद्वा शिवे, पद्वा पथि स्मृतः ॥ ६०० ॥

अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः ।
पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे ॥ ६०१ ॥

---

1. सृ omitted in Sid. and Perusūri,
2. हट्टे A.

दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि ।
शक्वा हस्तिन्यथाङ्गुल्यां नदीमेखलयोरपि ॥ ६०२ ॥

छन्दोभेदे शक्वरी स्यात्

**शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥ ४—११३ ॥**

शीवा त्वजगरे भवेत् ।
गोधायां शीवरी क्रुश्वा क्रोष्टौ, रुह्वा महीरुहि ॥ ६०३ ॥

जित्वा जयिनि, वायौ तु क्षित्वा, सृत्वा प्रजापतौ ।
धृत्वा विष्णौ

**ध्याप्योः सम्प्रसारणं च ॥ ४—११४ ॥**

कर्मकरे धीवा, पीवाकृशे मतः ॥ ६०४ ॥

मत्स्याधान्यां धीवरी च, तरुण्यां पीवरी भवेत् ।

**अदेर्ध च ॥ ४—११५ ॥**

अध्वा मार्गे भवेत्

**प्र ईरशदोस्तुट् च ॥ ४—११६ ॥**

प्रेत्वा प्रशत्वा चापि सागरे ॥ ६०५ ॥

उभौ नद्यां स्त्रियां स्यातां प्रेत्वरी च प्रशत्वरी ।

**सर्वधातुभ्य इन् ॥ ४—११७ ॥**

पचिरग्नौ भवेत्, तुण्डिरुदरेऽथ वलिर्वली ॥ ६०६ ॥

तदेकदेशेऽथ वटिरुदरे, याजके यजिः ।
यतिः स्त्री पदविच्छेदे निकारयतिनोः पुमान् ॥ ३०७ ॥

काशिर्देशे, लताभेदे मलिः, पलाञ्जने मसिः ।
क्रीडायां केलिरुद्दिष्टा, हेलिः सूर्ये पुमान् भवेत् ॥ ६०८ ॥

कोटिः स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः ।
बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे ॥ ६०९ ॥

नन्दिर्द्यूताङ्ग आनन्दे स्त्रियां ना नन्दिकेश्वरे ।
कलिः स्त्री कलिकायां ना शूराज्योः कलहे युगे ॥ ६१० ॥

विपणिः पण्यवीथौ स्यात्, जटायां तु भवेज्जटिः ।

**हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ॥ ४—११८ ॥**

हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु ॥ ६११ ॥

कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान् ।
पिङ्गे हरितवर्णे च वाच्यनिघ्नो भवेदयम् ॥ ६१२ ॥

पेषिरिन्द्रायुधे प्रोक्तो, रोहिर्व्रतिनि कीर्त्यते ।
वर्तिर्भेषजनिर्माणे नयनाञ्जनलेखयोः ॥ ६१३ ॥

गात्रानुलेपनीदीपदशादीपेषु योषिति ।
वेदिरङ्गुलिमुद्रायां परिष्कृतभुवि स्त्रियाम् ॥ ६१४ ॥

ना पण्डितेऽथ छेदिः स्याच्छेदके वर्धकावपि ।
कीर्तिः प्रसादयशसोः विस्तारे कर्दमेऽपि च ॥ ६१५ ॥

**इगुपधात् कित् ॥ ४—११९ ॥**

ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयम् ।
शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि ॥ ६१६ ॥

लिपिर्लिविश्च वर्णानां विन्यासे कर्षणे कृषिः ।
तूलिः कूर्च्यां, रुचिर्दीप्तौ

**भ्रमेः सम्प्रसारणं च ॥ ४—१२० ॥**

भृमिर्भ्रमणशीलिनि ॥ ६१७ ॥

वायौ, भ्रमिस्तु भ्रमणे

**क्रमितमिशतिस्तम्भामत इच्च ॥ ४—१२१ ॥**

क्रिमिर्ना कृमिले खरे ।
लाक्षायां च, कृमिस्तद्वत्, तिमिः स्यान्मत्स्यभिद्यपि ॥ ६१८ ॥

शितिः पुमान् भूर्जतरौ त्रिषु स्यादसिते सिते ।
**स्तिम्भिः सिन्धौ**

**मनेरुच्च ॥ ४—१२२ ॥**

मुनिर्वङ्गसेनवृक्षे जिने मुनौ ॥ ६१९ ॥

**वर्णेर्वलिश्चाहिरण्ये ॥ ४—१२३ ॥**

वलिर्दैत्यप्रभेदे च करचामरदण्डयोः ।
उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि ॥ ६२० ॥

गृहदारुप्रभेदे च जठरावयवेऽपि च ।
वर्णिः सुवर्णे

**वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् ॥ ४—१२४ ॥**

अथ भवेद्वासिश्छेदनवस्तुनि ॥ ६२१ ॥

वापिः स्यादुदकाधारे, याजिर्यष्टरि कीर्तितः ।
रेखापङ्क्त्योः स्त्रियां राजिर्वातालौ व्राजिरिष्यते ॥ ६२२ ॥

सादिस्तु सारथौ प्रोक्तो, निघातिर्लोहघातिनि ।
वाशिश्छेदनवस्त्वग्न्योः, वादिर्विदुषि वाचके ॥ ६२३ ॥

वारिर्वाग्गजबन्धन्योः स्त्री क्लीबेऽम्बुनि बालके[1] ।
वारी घटीभबन्धन्योर्हारिः पथिकसन्ततौ ॥ ६२४ ॥

द्यूतादिभङ्गे स्त्रीलिङ्गस्तथा खाटिरसङ्ग्रहे ।
किणे शवरथेऽपि स्यात्

**नहो भश्च ॥ ४—१२५ ॥**

नाभिस्तु क्षत्रिये पुमान् ॥ ६२५ ॥

चक्रमध्ये मुख्यनृपेऽथो प्राण्यवयवे द्वयोः ।
स्त्रियां कस्तूरिकायां स्यात्

**कृषेर्वृद्धिश्छन्दसि ॥ ४—१२६ ॥**

कार्षिच्छन्दसि पावके ॥ ६२६ ॥

---

1. ह्रिवेरे बालकेऽम्बुनि B. & T. क्लीबेऽम्बुने बालके A.

**श्रः शकुनौ ॥ ४—१२७ ॥**

शारिर्नाक्षोपकरणे स्त्रियां शकुनिकान्तरे ।
युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च ॥ ६२७ ॥

शालिस्तु कलमादौ च गन्धमार्जारके पुमान् ।

**कृञ उदीचां कारुषु ॥ ४—१२८ ॥**

कारिः स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनि ॥ ६२८ ॥

**जनिघसिभ्यामिण् ॥ ४—१२९ ॥**

जनिर्जनी च सधवावध्वोर्जनन ओषधौ ।

घासिर्भक्षे कृष्णवर्त्मनि

**अज्यतिभ्यां च ॥ ४—१३० ॥**

आजिर्युद्धे समावनौ ॥ ६२९ ॥

आतिर्गन्तरि वौ

**पादे च ॥ ४—१३१ ॥**

पङ्गे पदाजिः सपदातिकः ।

**अशिपणाय्यो रुडायलुकौ च ॥ ४—१३२ ॥**

राशिः स्यात्पुञ्जमेषाद्योः, करे पाणिः

**वातेर्डिच्च ॥ ४—१३३ ॥**

विरण्डजे ॥ ६३० ॥

**प्रे हरतेः कूपे ॥ ४—१३४ ॥**

प्रहिः कूपे

**नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥ ४—१३५ ॥**

अथ मूलस्वे वस्त्रग्रन्थौ च नीविवाक् ।

**समाने ख्यः स चोदात्तः ॥ ४—१३६ ॥**

सखा मित्रे सहाये

**आङि श्रिहनिभ्यां ह्रस्वश्च ॥ ४—१३७ ॥**

अश्रिः [1]कोणेऽहिर्वृत्रसर्पयोः ॥ ६३१ ॥

**अच इः ॥ ४—१३८ ॥**

रविः सूर्ये, पविर्वज्रे, कविर्वाल्मीकिशुक्रयोः ।
सूरौ काव्यकरे पुंसि स्याद्वलीने[2] तु योषिति ॥ ६३२ ॥

अरिः शत्रौ, तरिर्नावि स्यादलिर्भ्रमरेऽपि च ।

**खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च[3] ॥ ४—१३९ ॥**

खनिः खानिश्चाकरे स्यात्, कषिर्हिंस्रेऽथ गन्तरि ॥ ६३३ ॥

अज्जिः प्रोक्तस्तथा क्षेपणकेऽपि परिकीर्तितः[4] ।
असिः खड्गे, वसिर्वस्त्रे, वनिः पावकयाच्ञयोः ॥ ६३४ ॥

सनिर्दानाध्येषणयोर्भक्तौ, शब्दे पुनर्ध्वनिः ।
ग्रन्थिर्ना पर्वणि, चरिश्चलिश्चापि भवेत्पशौ ॥ ६३५ ॥

**वृतेश्छन्दसि ॥ ४—१४० ॥**

**भुजेः किच्च ॥ ४—१४१ ॥**

भुजिरग्नौ

**कृगृशॄपृकुटिभिदिच्छिदिभ्यश्च ॥ ४—१४२ ॥**

किरिः कोले, गिरिर्ना नेत्ररुग्भिदि ।
अद्रौ गिरियके योषिद्गीर्णौ पूज्ये पुनस्त्रिषु ॥ ६३६ ॥

शिरिः शलभहन्त्रोः स्यात्, पुरी राज्ञि नदीपुरोः ।
कुटिः कुटी कुम्भदास्यां सुरायां चित्रगुच्छके ॥ ६३७ ॥

---

1. कोले B.
2. स्यात् खलीने T.
3. चलिभ्यश्च Sid
4. A reads "भ्रमरेऽलिरथाकरे । खनिः खानिः, कषिर्हिंस्रेऽथाज्जिः प्रेषणिकार्थकः ॥"

शालाशरीरयोर्वज्रे तु भिदिः, परशौ छिदिः ।
तित्तिरिः पक्षिभेदे स्यात्

**कुठिकम्प्योर्नलोपश्च ॥ ४—१४३ ॥**

कुठिः पर्वतवृक्षयोः ॥ ६३८ ॥

कुडिर्देहे, कपिर्ना स्यात् सिल्हके वानरे हरौ ।

**सर्वधातुभ्यो मनिन् ॥ ४—१४४ ॥**

कर्म व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम् ॥ ६३९ ॥

चर्म कृत्तौ च फलके, भसिते भस्म, शर्म के ।
जन्मोत्पत्तौ, स्थाम बले, मायायां छद्म कीर्त्यते ॥ ६४० ॥

सुत्मापि च सूत्रामा शक्रे, हेम तु काञ्चने ।
कफे श्लेष्मा बाष्प ऊष्मा, सन्दाने दाम पुंसि न ॥ ६४१

यूपस्याग्रे तर्म भवेत्

**बृंहेर्नोऽच्च ॥ ४—१४५ ॥**

ब्रह्म विप्रे प्रजापतौ ।
ऋत्विग्योगभिदोस्तत्त्वतपोवेदेषु न द्वयोः ॥ ६४२ ॥

**अशिशकिभ्यां छन्दसि ॥ ४—१४६ ॥**

पाषाणेऽश्मा, वृष्णि शक्मा

**हृभृधृसृस्तृशृभ्य इमनिच् ॥ ४—१४७ ॥**

हरिमानेहसि स्मृतः ।
कुटुम्बे भरिमा, रूपे धरिमा, सरिमानिले ॥ ६४३ ॥

तल्पे तु स्तरिमा, सूतौ शरिमापि सवीमना ।
दीर्घमध्या अपीष्यन्ते पञ्चैते हरिमादयः ॥ ६४४ ॥

---

1. कुडि Sid.

**जनिमृङ्भ्यामिमनिन्** ॥ ४—१४८ ॥

जनिमा जन्मनि भवेत्, मृत्यौ तु मरिमा मतः[1]।

**वेञः सर्वत्र** ॥ ४—१४९ ॥

वेमास्त्रियां वायदण्डे

**नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्**[2] ॥ ४—१५० ॥

संज्ञायां नाम कीर्त्यते ॥ ६४५ ॥

सीमसीमे स्त्रियां स्यातामवधौ, व्योम पुष्करे ।
गात्रकेशे रोम, लोम, पाप्मा स्यात् पुंसि किल्बिषे ॥ ६४६ ॥

परिमाणे तेजसि च ध्याम, यक्ष्मा क्षये मतः ।
यज्ञद्रव्ये च चन्द्रे च सोमा, होमापि चाहुतौ ॥ ६४७ ॥

धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः ।

**मिथुने मनिः** ॥ ४—१५१ ॥

सुशर्मा राजभेदे स्यात्, सुधर्मा क्षत्रिये मतः ॥ ६४८ ॥

**सातिभ्यां मनिन्मनिणौ** ॥ ४—१५२ ॥

साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च ।
आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि ॥ ६४९ ॥

धृतावपि मनीषायां शरीरब्रह्मणोरपि ।

**हनिमशिभ्यां सिकन्** ॥ ४—१५३ ॥

हंसिका हंसयोषायां, मम्भराल्यां तु मक्षिका ॥ ६५० ॥

**कोररन्** ॥ ४—१५४ ॥

कबरः पाठके, केशविन्यासे कबरी मता ।

**गिर उडच्** ॥ ४—१५५ ॥

गरुडो वैनतेये स्यात्

---

1. B. & T. add "शक्माद्या मरिमान्ताः स्युः शब्दाश्छन्दसि साधवः ।"
2. धामन् Sid

**इन्देः कमिन्नलोपश्च**[1] ॥ ४—१५६ ॥

सन्निकृष्टे त्विदं त्रिषु ॥ ६५१ ॥

**कायतेर्डिमिः** ॥ ४—१५७ ॥

किं जिज्ञास्ये तथा क्षेपे

**सर्वधातुभ्यः ष्ट्रन्** ॥ ५—१५८ ॥

वसने वस्त्रमस्त्रियाम् ।
अस्त्रं प्रहरणे चापे करवाले नपुंसकम् ॥ ६५२ ॥

श्रुतिस्मृतिपुराणेषु शास्त्रं न्यायादिषट्स्वपि ।
छत्रं स्यादातपत्रेऽस्त्री, पात्रं तीरद्वयान्तरे ॥ ६५३ ॥

योग्येऽमात्ये स्रुवादौ च, पात्र्यमत्रे त्रिषु स्मृता ।
पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः ॥ ६५४ ॥

गन्त्री शकट्यां दंष्ट्रा तु दन्ते, राष्ट्रं तु नीवृति ।

**अस्जिगमिनमिहनिविश्यशां वृद्धिश्च** ॥ ४—१५९ ॥

भ्राष्ट्रोऽम्बरीषे, शकटे गान्त्रं, स्तोत्रे तु नान्त्रवाक् ॥ ६५५ ॥

हन्त्रं मृतौ, विष्टपे तु वैष्टमाष्ट्रं विहायसि ।

**दिवेर्द्युच्च** ॥ ४—१६० ॥

द्यौत्रं ज्योतिषि

**उषिखनिभ्यां कित्** ॥ ४—१६१ ॥

अथोष्ट्रः स्यान्मये, खात्रं खनित्रके ॥ ६५६ ॥

जलाधारविशेषे च

**सिविमुच्योष्टेरू च** ॥ ३—१६२ ॥

सूत्रं तन्तुव्यवस्थयोः ।
भवेच्च सूचनाग्रन्थे, मूत्रं तु प्रस्रावे[2] भवेत् ॥ ६५७ ॥

---

1. कमिर्नलोपश्च Sid. 2. प्रस्रवे A. & B. प्रस्रवे T.

**अमिचिमिदिशसिभ्यः क्तः ॥ ४—१६३ ॥**

अन्त्रं तुदरनाड्यां स्यात्, चित्रं कर्बुर अद्भुते ।
तद्युक्ते तु त्रिषु क्लीबे तिलकालेख्ययोर्भवेत् ॥ ६५८ ॥

चित्राखुपर्णीगोडुम्बासुभद्रादन्तिकासु च ।
मायायां सर्पनक्षत्रनदीभेदेषु च स्मृता ॥ ६५९ ॥

मित्रं सुहृदि सूर्ये ना, शस्त्रं लोहास्त्रयोर्भवेत् ।
छुरिकायां स्त्रियां

**पुवो ह्रस्वश्च ॥ ४—१६४ ॥**

पुत्रस्तनये

**स्त्यायतेर्ड्रट् ॥ ४—१६५ ॥**

स्त्री तु योषिति ॥ ६६० ॥

**गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥ ४—१६६ ॥**

गोत्रा भूगव्ययोर्गोत्रः शैले, गोत्रं कुलाख्ययोः ।
सम्भावनीयबोधे च काननक्षेत्रवर्त्मसु[1] ॥ ६६१ ॥

धत्रं गृहे, लताभेदे वेत्रं, पत्रं, भवेत्पुनः ।
गार्हपत्ये, मुखे वक्त्रं, कर्मकाष्ठे तु यन्त्रवाक् ॥ ६६२ ॥

सत्रं यज्ञे सदादाने वनाच्छादनयोर्मिषे ।
क्षत्रं स्यात् क्षत्रिये

**हुयामाश्रुभसिभ्यस्त्रन् ॥ ४—१६७ ॥**

होत्रं हविष्यृत्विजि तु स्त्रियाम् ॥ ६६३ ॥

यात्रा तु [2]यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम् ।
मात्रा कर्णादिभूषायां वित्ते माने परिच्छदे ॥ ६६४ ॥

---

1. वर्त्मनि T.
2. यातनेऽपि B. & T.

अक्षरावयवे स्वल्पे मात्रं कार्त्स्न्येवधारणे ।
श्रोत्रं कर्णे, तत्र भस्त्रा या स्याच्चर्मप्रसेविका ॥ ६६५ ॥

**गमेरा च ॥ ४—१६८ ॥**

स्तम्बेरमाग्रजङ्घादिविभागेऽङ्गे कलेबरे ।
गात्रं

**दादिभ्यच्छन्दसि ॥ ४—१६९ ॥**

दात्रं छिदाद्रव्ये, क्षेत्रं भूमिकलत्रयोः ॥ ६६६ ॥

केदारे च

**भूवादिगृभ्यो णित्रन् ॥ ४—१७० ॥**

अथ भावित्रं लोकत्रय उदाहृतम् ।
वादित्रं तु भवेद्वाद्ये, स्याच्च गारित्रमोदने ॥ ६६७ ॥

**चरेर्वृत्ते ॥ ४—१७१ ॥**

चारित्रं वृत्ते

**अशित्रादिभ्य इत्रोत्रौ ॥ ४—१७२ ॥**

अशित्रं तु चरौ, याने वहित्रवाक् ।
मह्यां धरित्र्यथ लोत्रं स्मृतं प्रहरणे तथा ॥ ६६८ ॥

वरुत्रं स्यात् प्रावरणे, वधित्रं मन्मथे मतम् ।
कटित्रं [1]चर्मभेदे स्यात्, लोत्रं चोरस्य लक्ष्मणि ॥ ६६९ ॥

**अमेर्द्विषति चित् ॥ ४—१७३ ॥**

शत्रावमित्रः

**आः समिणनिकषिभ्याम् ॥ ४—१७४ ॥**

समया, निकषा, सविधेऽव्यये ।
दोषा रात्रौ, दिवारात्रौ, स्वधा स्यात् पितृतर्पणे ॥ ६७० ॥

---

1. कटित्रः B. & T

**चितेः कणः कश्च ॥ ४—१७५ ॥**

चिक्कणं मसृणे

**सूचेः स्मन् ॥ ४—१७६ ॥**

सूक्ष्मं [1]कतकेऽध्यात्म इष्यते

वाच्यवत्स्वल्पे

**पातेर्डुम्सुन् ॥ ४—१७७ ॥**

पुमांस्तु पुरुषे मतः ॥ ६७१ ॥

**रुचिभुजिभ्यां किष्यन् ॥ ४—१७८ ॥**

रुचिष्यमिष्टे भुजिष्यः स्वतन्त्रे हस्तसूत्रके ।
दासे स्त्री गणिकादास्योः

**वसेस्तिः ॥ ४—१७९ ॥**

वस्तिर्नाभेरधो द्वयोः ॥ ६७२ ॥

निरूहेऽथो वस्तयः स्युर्वसनस्य दशासु च ।
अगस्तिः कुम्भयोनौ स्याद्वङ्गसेनतरौ पुमान् ॥ ६७३ ॥

शस्तिः स्याद्राजदण्डे च, यष्टिस्ताडनसाधने ।
पुलस्तिर्ऋषिभेदे स्यात्

**सावसेः ॥ ४—१८० ॥**

कल्याणे स्वस्ति चाव्ययम् ॥ ६७४ ॥

**नौ तसेः ॥ ४—१८१ ॥**

अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुले ।

**पदिप्रतिभ्यां नित् ॥ ४—१८२ ॥**

पत्तिः पदातौ, प्रथितिः प्रख्यातौ च भवेत्

---

1. कटके B ; कण्टके ; A

**इणातेर्ह्रस्वश्च ॥ ४—१८३ ॥**

इतिः ॥ ६७५ ॥

मत्स्ये चर्मपुटे पुंसि

**कृतॄकृपिभ्यः कीटन् ॥ ४—१८४ ॥**

किरीटो मुकुटेऽस्त्रियाम् ।
नपुंसके वेष्टनेऽथ शिरोवेष्टनलोभ्रयोः ॥ ६७६ ॥

तिरीटं ना कूलवृक्षे, कृपीटमुदरेप्सु च ।
कपीटमपि तद्वत् स्यात्

**रुचिवचिकुचिकुटिभ्यः[1] कितच् ॥ ४—१८५ ॥**

रुचितं मिष्ट इष्यते[2] ॥ ६७७ ॥

उचितं तु भवेन्यस्ते मिते ज्ञाते[3] समञ्जसे ।
कुचितं स्यात्परिमिते, कुटितं कुटिलेऽपि च ॥ ६७८ ॥

**कुटिकुषिभ्यां क्मलन् ॥ ४—१८६ ॥**

कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे ।
कुप्मलं छादने चाप्युत्फुले

**कुषेर्लश्च ॥ ४—१८७ ॥**

पापे तु कुल्मलम् ॥ ६७९ ॥

**सर्वधातुभ्योऽसुन् ॥ ४—१८८ ॥**

चेतः स्वान्ते, तडाके तु सरः, स्थूले सरस्यपि ।
पयः क्षीरे च नीरेऽथ सभायां पुंसि नो सदः ॥ ६८०

वर्चो नपुंसकं रूपे विष्टायामपि तेजसि ।
पुंसि चन्द्रस्य तनये, तपो लोकान्तरेऽपि च ॥ ६८१ ॥

---

1. कुटि omitted in Sid.
2. मिष्टवस्तुनि T.
3. जाते A.

चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः ।
सहो बले ज्योतिषि च पुंसि हेमन्तमार्गयोः ॥ ६८२ ॥

तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे ।
रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् ॥ ६८३ ॥

सहप्रयोगेऽप्यनयो रोदस्यावपि रोदसी ।
वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम् ॥ ६८४ ॥

महस्तेजस्युत्सवेऽनः शकटेऽन्ने च तत्स्थले ।
अयो लोहेऽथ माः मासि चन्द्रे च बहुद्दश्वनि ॥ ६८५ ॥

**रपेरत एञ्च ॥ ४—१८९ ॥**

रेपोऽवद्ये

**अशेर्देवने युट् च ॥ ४—१९० ॥**

यशः कीर्तौ

**उब्जेर्बले बलोपश्च ॥ ४—१९१ ॥**

ओजो दीप्तिप्रकाशयोः ।

अवष्टम्भे बले च

**श्वेः सम्प्रसारणं च ॥ ४—१९२ ॥**

अथ मृतदेहे बले शवः ॥ ६८६ ॥

ऊधो गोस्तनविस्तारे

**श्रयतेः स्वाङ्गे शिरः किच्च ॥ ४—१९३ ॥**

शिरः स्यान्मस्तकेऽपि च ।

**अर्तेरुच्च ॥ ४—१९४ ॥**

वक्षस्युरः

**व्याधौ शुट् च ॥ ४—१९५ ॥**

पायुरोगे त्वर्शो

**उदके नुट् च ॥ ४—१९६ ॥**

अर्णस्तु भवेज्जले ॥ ६८७

**इण आगसि ॥ ४—१९७ ॥**

एनः पापे भवेत्

**रिचेर्धने घित् किच्च[1] ॥ ४—१९८ ॥**

रेक्णो रेको, रिच्अश्च काञ्चने ।

**चायतेरन्ने ह्रस्वश्च ॥ ४—१९९ ॥**

अन्ने चनश्चणो

**वृङ्शीङ्भ्यां स्वरूपाङ्गयोः पुट् च ॥ ४—२०० ॥**

रूपे वर्पो वर्फश्च कीर्तितौ ॥ ६८८ ॥

शेपः शेफश्च गुह्येऽण्डे

**स्रुरीभ्यां तुट् च ॥ ४—२०१ ॥**

स्रोतोऽम्बुवेगे तथेन्द्रिये ।

रेतः शुक्रे पारदे च

**पातेर्बले जुट् च ॥ ४—२०२ ॥**

पाजः पाय उभे बले ॥ ६८९ ॥

**उदके थुट् च ॥ ४—२०३ ॥**

**अन्ने च ॥ ४—२०४ ॥**

पाथो जलान्नयोः

**अदेर्नुम् धौ च ॥ ४—२०५ ॥**

अन्धस्त्वन्ने

**स्कन्देश्च स्वाङ्गे ॥ ४—२०६ ॥**

---

1. घिच्च Sid.

स्कन्धोऽङ्गभिद्यपि ।

**आपः कर्माख्यायां ह्रस्वो नुट् च वा[1] ॥ ४—२०७ ॥**

यज्ञकर्मण्यपश्चाप्नो, जले त्वापः प्रकीर्तितम् ॥ ६९० ॥

**रूपे जुट् च ॥ ४—२०८ ॥**

अब्जो रूपे

**उदके नुम्भौ च ॥ ४—२०९ ॥**

जले त्वम्भो

**नहेर्दिवि भश्च ॥ ४—२१० ॥**

नभो व्योम्नि पुमान् घने ।

घ्राणश्रावणवर्षासु बिसतन्तौ पतद्ग्रहे ॥ ६९१ ॥

**इण आगोऽपराधे च ॥ ४—२११ ॥**

आगः पापेऽपराधे

**अमेर्हुक् च ॥ ४—२१२ ॥**

अंहः पापे

**रमेश्च ॥ ४—२१३ ॥**

रंहो भवेज्जवे ।

**देशे ह च ॥ ४—२१४ ॥**

रहस्तत्त्वे रते गुह्ये

**अश्वयञ्जियुजिभृजिभ्यः कुश्च ॥ ४—२१५ ॥**

अथाङ्कश्चिह्नशरीरयोः ॥ ६९२ ॥

अङ्गः पक्षिणि, योगस्तु समाधौ समयेऽपि च ।

भर्गस्तेजःप्रजापत्योः, ओको मन्दिर आश्रये ॥ ६९३ ॥

---

1. ह्रस्वो नुट् च वा taken as part of the explantion in Sid. ह्रस्वस्तुट् च वा Ujj.

**भूरञ्जिभ्यां कित् ॥ ४—२१६ ॥**

भुवोऽव्ययं चान्तरिक्षे, रजः क्लीबं गुणान्तरे ।
आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते ॥ ६९४ ॥

**वसेर्णित् ॥ ४—२१७ ॥**

वासो वस्त्रे भवेत्

**चन्देरादेश्च छः ॥ ४—२१८ ॥**

छन्दः स्वैराचाराभिलाषयोः[1] ।

**पचिवचिभ्यां सुट् च ॥ ४—२१९ ॥**

पक्षः पक्षे पतत्रे च वत्सरार्धे छदावपि ॥ ६९५ ॥

वक्षस्तूरसि

**वहिहाधाञ्भ्यश्छन्दसि ॥ ४—२२० ॥**

अथोक्षिण स्याद्वक्षा, हासाः कलानिधौ ।
धासास्तु पर्वते, वाहा हाया धाया क्रमादमी ॥ ६९६ ॥

वोढरि त्याजके धर्तरि[2]

**इण आसिः ॥ ४—२२१ ॥**

अयाः स्यात्पावकेऽव्ययम् ।

**मिथुनेऽसिः पूर्ववच्च सर्वम् ॥ ४—२२२ ॥**

सुपयाः स्यात्संपिबति, सुस्रोताः संस्रवत्यपि ॥ ६९७ ॥

**नञ्याहन[3] एह च ॥ ४—२२३ ॥**

कालेऽनेहा भवेत्

**विधाञो वेध च ॥ ४—२२४ ॥**

वेधा बुधे विष्णौ प्रजापतौ ।

---

1. B. & T. add "पद्यप्रभेदेऽपि तथा दन्तमेनं प्रचक्षते ।"
2. B. & T. add: "एते वेदे प्रकीर्तिताः । वक्षःप्रभृतयः शब्दाः"
3. नञि हन Sid

**नुवो धुट् च ॥ ४—२२५ ॥**

नोधा ऋषौ

**गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वम्**[1] **॥ ४—२२६ ॥**

**चन्द्रे मो डित् ॥ ४—२२७ ॥**

चन्द्रमास्तु भवेत्तुहिनदीधितौ ॥ ६९८ ॥

**वयसि धाञः ॥ ४—२२८ ॥**

वयोधास्तरुणे प्रोक्तः

**पयसि च ॥ ४—२२९ ॥**

पयोधा जलदेऽर्णवे[2] ।

**पुरसि च ॥ ४—२३० ॥**

पुरोहिते पुरोधाः स्यात्

**पुरूरवाः ॥ ४—२३१ ॥**

बुधपुत्रे पुरूरवाः ॥ ६९९ ॥

राजर्षिभेदे च भवेद् द्वयोः पुरुरवा अपि ।

**चक्षेर्बहुलं शिच्च ॥ ४—२३२ ॥**

विचक्षाः स्यादुपाध्याये नृचक्षा राक्षसे मतः ॥ ७०० ॥

आख्याः प्रख्या अब्जयोनौ

**उषः कित् ॥ ४—२३३ ॥**

उषो मलयकल्ययोः ।

कर्णरन्ध्रे

**दमेरुनसिः ॥ ४—२३४ ॥**

दमूनास्तु दमुना आशुशुक्षणौ ॥ ७०१ ॥

---

1. कारकोपपदयोः प्रकृतिस्वरत्वं च । Sid.
2. जलदेऽम्बुधौ T.

**अङ्गिराः**[1] ॥४—२३५ ॥

अङ्गिरा ऋषिभेदे स्यात्

**अप्सराः**[2] ॥ —४—२३६ ॥

उर्वश्यादौ तथाप्सराः ।

**विदिभुजिभ्यां विश्वे ॥ ४—२३७ ॥**

**वशेः कनसिः ॥ ४—२३८ ॥**

विश्ववेदा, विश्वभोजा उशनाग्नीन्द्रयोः कवौ ॥ ७०२

इत्युणादिकोशे ।

॥ चतुर्थपादीयनामसंग्रहः ॥

—:*:—

1. अङ्गतेरसिरिडागमश्च । Sid
2. सर्तेरप्पूर्वादसिः Sid.

श्रीः

## ॥ अथ पञ्चमः पादः ॥



**अदि भुवो डुतच् ॥ ५—१ ॥**

अद्भुतं स्मृतमाश्चर्ये

**गुधेरूमः ॥ ५—२ ॥**

गोधूमो व्रीहिभिद्यपि ।

ओषधौ नागरङ्गे

**मसेरूरन् ॥ ५—३ ॥**

अथ मसूरो व्रीहिवेश्ययोः ॥ ७०३ ॥

वा पुमान् स्यान्मसूरी तु पापरोगोपधानयोः ।

**स्थः किच्च ॥ ५—४ ॥**

स्थूरः स्थिरे मनुष्ये च

**पातेरति ॥ ५—५ ॥**

पातिः[1] स्वामिनि कीर्त्यते ॥ ७०४

संपातिः पक्षिराजे स्यात्

**वातेर्नित् ॥ ५—६ ॥**

वातिरादित्यसोमयोः ।

**अर्तेश्च ॥ ५—७ ॥**

भवेदरतिरुद्वेगे

**तृहेः क्नो हलोपश्च ॥ ५—८ ॥**

तृणं शष्पे प्रकीर्तितम् ॥ ७०५ ॥

---

1. A. पति

**भृमूलुटितनिताडिभ्य उलच् ॥ ५—९ ॥**

वरुलो जातिभेदे स्यात्, लुटुलः पक्षिणि स्मृतः ।
तनुलस्तु भवेत्सूक्ष्मे, ताडुलश्चौर इष्यते ॥ ७०६ ॥

**दंसेष्टटनौ न आत्[1] ॥ ५—१० ॥**

दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि ।
चेटिकायां तु दासी स्यात्,

**दंशेश्च ॥ ५—११ ॥**

द्वयोर्दाशोऽपि धीवरे ॥ ७०७

**उदि चेर्डैसिः ॥ ५—१२ ॥**

उच्चैर्महति

**नौ दीर्घश्च ॥ ५—१३**

नीचे स्यादमहत्यव्यये उभे ।

**सौ रमः क्तो दमे पूर्वपदस्य च दीर्घः ॥ ५—१४ ॥**

सूरतस्तूपशान्ते स्यात् कृपालौ चापि कीर्त्यते ॥ ७०८ ॥

**पूङो यण्णुक् ह्रस्वश्च ॥ ५—१५ ॥**

पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः ।

**स्रंसेः शिः कुट् किच्च ॥ ५—१६ ॥**

शिक्यं स्याद्रज्जुविकृतौ

**अर्तेः क्युजुच्च[2] ॥ ५—१७ ॥**

मेषे तूरण इष्यते ॥ ७०९ ॥

**हिंसेरीरनीरचौ ॥ ५—१८ ॥**

दुष्टे व्याघ्रे च हिंसीरः

---

1. न आ च Sid
2. क्युरुच्च Sid.

